सुधर्माश्रितो बृहन्नलानुभावोऽप्यन्तःस्वरतो महिषोसम्म-

---

विधमानसपापरहित इति परिहारः । तानि चोक्तानि मनुना ।

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं मानसं स्मृतम् ॥

इति ।

१ आभासत्वे विरोधस्य विरोधाभास इष्यते ।

काव्यप्रकाशे त्वयमेव विरोध इति व्यवहृतः ।

विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।

इति । एवमग्रेऽपि । अपिरापततो विरोधस्य द्योतकः । पक्षान्तरेऽनेकार्थत्वात् समुच्चयस्य । धृतराष्ट्रोऽपि पाण्डोरग्रजोऽपि गुणप्रियः । भीमप्रिय इति विरोधः ।

गुणोऽप्रधाने शुक्लादौ गुणः सूदे वृकोदरे ।

इति विश्वः ।

धृतराष्ट्रो धृतराज्यः । गुणप्रियः सन्धिविग्रहादिषड्गुणप्रिय इत्यविरोधः ।

सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।

षड्गुणा इत्यमरः ।

क्षमानुगतोऽपि पृथिव्यनुगतोऽपि सुधर्माश्रितो देवसभाश्रित इति विरोधः । क्षमा शान्तिः क्षमा धरेति विश्वः । स्यात् सुधर्मा देवसभेत्यमरः । क्षमानुगतः शान्तियुक्तः सुधर्माश्रितः शोभनधर्माश्रित इत्यविरोधः ।

वोऽपि वृषोत्पाद्यतरलोऽपि महानायको राजा चिन्ताम-णिर्नाम।

यत्र च शासति धरणिमण्डलं छलनिग्रहप्रयोगो वादेषु[१]

---

छद्मग्रहाम् ये नडस्तृणभेदस्तस्येवानुभावो यस्य। यथा यत्नानपेक्षः सोऽभिवर्धते तथायमपीत्यर्थः। तादृशोऽप्यन्तर्मध्ये सरलो ग्रन्थिरहित इति विरोधः। छद्मडानुभावोऽर्जुनानु-भावोऽन्तःसरल इति परिहारः।

छद्मडो गुडाकेशे नले कौशिकनन्दने।

इति विश्वः।

महिष्याः सम्भवो यस्य तादृशो महिषो वृषोत्पादी वृषभ-जनक इति महोत्पात इति विरोधः। महिष्याः कृताभिषे-कायाः सम्भवो यस्य वृषोत्पादी धर्मजनक इति परिहारः।

कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः।

पुण्यश्रेयसी सुकृतं वृष इत्युभयत्रामरः।

अतरलोऽपि हारमध्यमणिभिन्नोऽपि महानायको हार-मध्यमणिरिति विरोधः। तरलो हारमध्यग इत्यमरः।

नायको नेतरि श्रेष्ठे हारमध्यमणावपि।

इति विश्वः। अतरलो धीरो महान् नायको नेता महाना-यक इति परिहारः।

परिसङ्ख्यायाह। काव्यादर्शे नियमस्तेषोऽयम्। यत्र चिन्ता-

---

१ नैयायिकवादेषु F

नास्तिकता चार्वाकेषु कण्टकयोगो नियोगेषु[1] परीवादो

मणौ। छलो वाक्छलो निग्रहः प्रतिज्ञाहान्यादिस्तेषां प्रयोगो वादेषु। पक्षे छलं कपटः। निग्रहो बन्धनम्।

२ ताडृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता।

नास्तिकता परलोकाभावज्ञानवत्त्वं चार्वाकेषु बौद्धविशेषेषु। भावे तल्। अस्तिनास्ति दिष्टं मतिरिति ठक्।

तावानेव हि लोकोऽयं यावानिन्द्रियगोचरः।

इति तत्सिद्धान्तः। मिथ्यादृष्टिर्नास्तिकतेत्यमरः। पक्षे नास्तिकता दरिद्रता। कण्टक अनेनेदं भुक्तमिति तत्स्वामिनि कथकस्तस्य योगो नियोगेषु। मोक्षाभिधा इति भाषायाम्। पक्षे। कण्टकः। क्षुद्रशत्रुः।

कण्टकः क्षुद्रशत्रौ च कर्मस्थानिकदूषणे।

इति विश्वः।

परीवादो वीणावादनवस्तु। पक्षे परीवादोऽपवादः।

परीवादोऽपवादे स्याद्वीणावादनवस्तुनि।

इति मेदिनी।

खलं धान्यमर्दनभूमिः।

खलं भूस्थानकल्केषु क्रूरे नीचेऽधमे खलः।

इति विश्वप्रकाशः। पक्षे खलः पिशुनः। पिशुनो दुर्जनः खल इत्यमरः।

---

१ वनेषु D इति नर० च। चा० कण्टको राजनियोगेषु इति जग०।

वीणास्तु खलसंयोगः शालिषु द्विजिह्वसङ्गतीर्नाहितुण्डिकेषु करच्छेदः क्षुद्रकरग्रहणेषु नेत्रोत्पाटनं मुनीनां द्विजराजविरु-

---

आहितुण्डिकेषु व्यालग्राहिषु द्विजिह्वसङ्गतीतिः सर्पसङ्ग-
मः। व्यालग्राह्याहितुण्डिक इत्यमरः। पक्षे द्विजिह्वः खलः।

द्विजिह्वः पन्नगे पुंसि खले स्यादन्यलिङ्गकः।

इति रन्तिः। अहितुण्डेन दीव्यति। तेन दीव्यतीति ठक्।

क्षुद्रकरग्रहणेषु राजग्राह्यभागेषु करच्छेदस्तस्यैव न्यूनीक-
रणम्। पूर्वनिश्चितादपि प्रार्थनादिना न्यूनग्रहणमित्यर्थः। पक्षे
करच्छेदो हस्तच्छेदः। बलिहस्तांशवः करा इत्यमरः।

विरोधाभासपरिसङ्ख्यासङ्करेणाह। मुनीनां यतीनां नेत्र-
मपि। पक्षे मुनीनां वृक्षविशेषाणां नेत्रोत्पाटनं मूलोत्पाटनम्।

तरुमूलाखिवस्त्रेषु नेत्रमर्थिगुणे रथे।

मुनिर्यतीङ्गुदीचूतप्रियालागस्त्यकिंशुके॥

इति द्वयोर्विश्वः।

पङ्कजानां कमलानां द्विजराजस्य चन्द्रस्य विरुद्धता। द्विज-
राजः शशधर इत्यमरः। पक्षे द्विजा ब्राह्मणाः पक्षिणो वा
ते च राजानश्च। दन्तविप्राण्डजा द्विजा इत्यमरः।

सार्वभौमो नृपः सार्वभौमशब्दस्य योगो दिग्गजस्य। सर्व-
भूमिपृथिवीभ्यामिति व्युत्पन्नस्य तेतद्गजाभिन्ने नास्ति प्रयोग
इत्यर्थः। उक्तं च।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।

D 2

द्गता पङ्कजानां सार्वभौमयोगो[१] दिग्गजस्याग्नितुलाशुद्धिः[२] सुवर्णानां सूचीभेदो मणीनां शूलभङ्गो युवतिप्रसवे[३] दुःशासन-

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इति । बहुवचनान्तपाठे तु पक्षेऽर्थपरत्वं राजपक्षे पूर्ववच्छब्दपरत्वम् ।

सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि ।

इति विश्वमेदिन्यौ ।

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।

इत्यमरः ।

अग्निना तुलया च शुद्धिर्वर्णाख्यानयोर्ज्ञानम् । सुवर्णानाम् । व्यक्त्यभिप्रायेण बहुवचनम् । तादृक्शुद्धियोग्यानामन्येषामभावादिति भावः ।

सूची लोहं सीवनसाधनं तेन भेदो मणीनाम् । न तु सूची कराद्यभिनयस्तस्य भेदः । सर्वेषां नर्तककीर्तकानां परिनिष्ठितत्वादिति भावः । यद्वा सूची नारीणां करणान्तरं गीताङ्गहारसंवेशक्रिया । तस्या भेद इति भावः । एतेनास्य राज्ये सपत्न्योर्ज्येष्ठाकनिष्ठाव्यवहाराभावो ध्वनितः ।

करणं साधनं क्षेत्रे कायकायस्थकर्मसु ।

गीताङ्गहारसंवेशक्रियाभेदेन्द्रियेषु च ॥

१ दिग्गजानाम् A B C D E F G H इति अग० च । २ -संशुद्धिः E F H इति अम० च । ३ -भेदो D इति मर० च ।

दर्शनं भारते करपत्रदारणं जलजानाम्। महावराहो गोत्रो-
द्धरणप्रवृत्तोऽपि गोत्रोद्दलनमकरोत्। राघवः परिहरन्नपि
जनकभुवं जनकभुवा सह वनं विवेश। भरतो रामे दर्शितभ-

इति विश्वप्रकाशः।

सूची कराद्यभिनये नारीणां करणान्तरे।

सूची सीवनद्रव्य इति च।

शूलेनोदरपीडया भङ्ग आमर्दः। भङ्गो आमर्दने। न तु शूलेन दुष्टप्राणिवधोपायेन भङ्गः। तादृशापराधिनोऽभावादिति भावः। यद्वा शूलः केतनं तस्य भङ्गः।

मृत्यौ प्रहरणे शूलः केतने योगरोगयोः।

इति विश्वप्रकाशः।

दुःशासनस्य धार्तराष्ट्रस्य दर्शनं शासनम्। न तु दुष्टशासनस्य निरीक्षणम्।

करैः सूर्यकिरणैः पत्त्रदारणं दलानां विकासनं पङ्कजानाम्। न तु करपत्रेण क्रकचेन दारणम्। क्रकचोऽस्त्री करपत्रमित्यमरः। करवत इति भाषायाम्।

विरोधाभासेनाह। महावराहो गोत्रोद्धरणाय पृथिव्युद्धरणाय प्रवृत्तोऽपि गोत्रोद्दलनमकरोत्। यदुद्धरणाय प्रवृत्तस्यैवोद्दलनमनुचितम्। गोत्रः पर्वत इत्यर्थान्तरेण परिहारः। एवमग्रेऽपि।

जनकभूः पितृभूमिः। पक्षे जनकभुवा सीतया।

क्तिरपि राज्ये विराममकरोत्। नलस्य दमयन्त्या मिलितस्यापि पुनर्भूपरिग्रहो जातः। पृथुरपि गोत्रसमुत्सारणविस्तारितभूमण्डलः। इत्थं नास्ति वागवसरः पूर्वतरराजेषु।
स पुनरन्य एव देवो न्यक्कृतसर्वोर्वीपतिचरितः। तथाहि स पर्वतः कटकसञ्चारिणो गन्धर्वान् दर्शितशृङ्गोन्नतिः सुख-

---

विरामो रामाभावो वैराग्यं च।

दमयन्त्या मिलितस्यापि नलस्य पुनर्भूपरिग्रहः पुनरूढापरिग्रहः।

पुनरक्षतयोनिर्वाप्युह्यते या यथाविधि।
सा पुनर्भूः।

पक्षे पुनर्द्वितीयवारं भूपरिग्रहः पृथ्वीपरिग्रहः।

गोत्राणां स्वगोत्रजानां स्ववंशजविरोधिता विरोधः। गोत्राणां पर्वतानामिति परिहारः।

इत्थं वर्णितविरोधाभासात् पूर्वेषु महाराजादिषु वागवसरः स्तुतियोग्यत्वं नास्ति। चिन्तामणिर्देवो राजा। यदत्र वक्तव्यं तद् दशकुमारभूषणे द्रष्टव्यम्। वर्णितेभ्योऽन्यगुणविशिष्ट एव। अत एव न्यक्कृतसर्वोर्वीपतिचरितः। भेदकातिशयोक्तिरलङ्कारः।

भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम्।

इति लक्षणात्।

पुनः श्लेषेणाह। पर्वत उत्सववान्। कटकं सैन्यम्। गन्धर्वा अश्वाः। शृङ्गं प्राधान्यम्। पक्षे कटको नितम्बः। गन्धर्वा हा-

यन् न विरराम। स हि मालयो नावश्यायोच्छलितो नो मायाजन्मने हितस्य। स हि मानी गिरि स्थितो वृषध्वजः। असौ सदागतिरवधूताखिलकान्तारः पावकाग्रेसरो न

---

शाखाग्रप्रभृतयः। शृङ्गं शिखरम्। तप् पर्वमरुद्भ्यामिति मत्वर्थीयस्तप्। वाजिवाहार्वगन्धर्व इति। कटकोऽस्त्री नितम्बोऽद्रेरिति। शृङ्गं प्राधान्यसान्वोश्चेति चामरः।

सव्यतिरेकं तमाह। स हि मालयो लक्ष्मीगृहम्। अवश्यायो गर्वः। माया कपटम्। जन्मने हितः। हितयोगे चेति चतुर्थी। पक्षे स हिमालयः। अवश्यायो हिमः। उमायाः पार्वत्याः। अवश्यायो हिमे गर्व इति धरणिः।

शुद्धश्लेषमाह। स हिमानी हिमसंहतिरूपो गिरिः पर्वतस्तत्र स्थितो वृषध्वजः। पक्षे। स हि मानी चित्तोन्नत्यवान्। गिरि वचने। वृषध्वजो धर्मध्वजः। पुण्यश्रेयसी सुकृतं वृष इत्यमरः।

सतां साधूनामाशाकत्वेन गतिर्निर्वाहो यस्मात्।

येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः।

इतिवत्। अवधूताः कम्पिता दूरीकृता वा कान्तारा दुर्गमार्गा दुर्भिक्षा वा येन। पावकानां पवित्रकर्तृणामग्रेसरः। तथा च मनुः।

अग्निश्चित् कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः॥

भोगोत्सुकः सुमनोहरश्च। स रत्नाकरोऽनहिमयः[१] कथम-
गाधः समर्यादो नोद्रेकोऽप्यस्य विस्मयः सदा हिमकरा-

इति। पावकोऽग्नौ सदाचार इति विश्वप्रकाशः। नभोगेषु
देवेषूत्सुकः। यद्वा। न भोगेषु स्त्र्यादिसुखेषूत्सुकः। उक्तं च।

मृगयाचास्तथा पानं गर्हितानि महीक्षिताम्।
दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णिषु॥

इति।

सुमनसः पण्डितान् हरति गुणग्रहणविश्राणनाभ्यां स्ववशी-
करोति। पक्षे सदागतिर्वातः। अवधूताखिलकान्तारः कम्पि-
ताखिलकाननः। पावकाग्रेसरो वह्निसहायः। नभोगेषु मेघेषू-
त्सुक उत्कण्ठितः। तथा च कालिदासः। मरुत्सखस्येव बला-
हकस्येति। सुमनसः पुष्पाणि हरति तादृशः। तथा च का-
लिदासः। वृन्तश्लथं हरति पुष्पमनोकहानामिति।

सुमनाः पुष्पमालत्योस्त्रिदशे कोविदेऽपि च।

इति विश्वप्रकाशः। स्त्रियः सुमनसः पुष्पमित्यमरः।

कान्तारः कानने चेक्षौ दुर्भिक्षे दुर्गवर्त्मनि।

इति विश्वः।

रत्नानामुत्तमवस्तूनामाकरः। रत्नं स्वजातिश्रेष्ठेऽपीत्यमरः।
अहिरिवाहिः खलस्तन्मयो न भवतीत्यनहिमयः। कथम्।
अगाधः गभीराशयः। यद्वा। लिप्सारहितः। गाधा लिप्सेत्य-
मरः। समर्याद उचितानतिक्रमणशीलः। उद्गत उत्थितरोको

१ नाहिमयः A B C D E G

अथोऽमृतमयः सपोतस्तस्याचलो न क्रोधो महानदीनः समुद्रः।

---

दीप्तिर्यस्य सः। इष दीप्तौ। घञ्। इत्यप्यस्य न विस्मयः। अनु-ष्णत्वादस्य दीप्तेर्न नाश इति भावः। तथा चोक्तम्।

देहीति वचनद्वारा देहस्थाः पञ्च देवताः।
तत्क्षणादेव नश्यन्ति धीश्रीह्रीकान्तिकीर्तयः॥

इति। किञ्च।

स पार्थः पार्थिवान् सर्वान् भूमिष्ठोऽपि रथस्थितान्।
एको निवारयामास लोभः सर्वगुणानिव॥

इति। यद्वा। अस्तोद्र इति न कोऽपि विस्मयः। जलाखेट-शीलस्यास्योद्रसङ्ग्राहकत्वादिति भावः।

सदा हिमकरवच्चन्द्रतुल्य आश्रयो गृहं यस्य। अमृतमयः। आह्लादकरूपवत्त्वात्। सपोतः सबालकः।

पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।

इत्यमरः। तस्य क्रोधोऽचलो न प्रणिपाताद्यपनेयो न भव-तीति भावः। महान् श्रेष्ठः। अदीनः। समुद्रः। मुद्रा राज-चिह्नं तत्सहितः। पक्षेऽगाधस्तलस्पर्शरहितः। मर्यादा सीमा। अस्तोद्र इति न कोऽपि विस्मयः। उद्रो जलमार्जारः। सदा हि निश्चयेन मकराणां जलजन्तूनामाश्रयः। यद्वा हिमकरश्चन्द्रः। अमृतं सुधा जलं वा। पयः कीलालम-मृतम्। पीयूषममृतं सुधा। इत्युभयत्रामरः। पोतो यान-पात्रम्।

स चन्द्र इव चणदानन्दकरः कुमुदवनबन्धुः सकलकलाकु-
लगृहं ननारातिबलः। मित्रोदयहेतुः काञ्चनशोभां बिभ्रद-

---

थालपात्रं तु पोतोऽब्धिभवे त्रिषु समुद्रियम्।

इत्यमरः। तस्याधोऽचलो मैनाकः। नक्रः कुम्भीरः। नक्रस्तु कुम्भीर इत्यमरः।

स चन्द्रः। चदि आह्लादे। स्फायितञ्चिवञ्चीति रक्। चण-दानां सुखप्रदानामानन्दकर्ता। खण्डिते रतान् सन्तोषयतीत्यर्थः। यद्वा। चणद उत्सवप्रदस्तासावानन्दकरश्च। मुदावनं मुद्वनं कोः पृथिव्या मुद्वनं तेन बन्धुरिव बन्धुः। तथाच कालिदासः।

तेनार्थवाँल्लोभपराङ्मुखेन
तेन घ्नता विघ्नभयं क्रियावान्।
तेनास लोकः पितृमान् विनेत्रा
तेनैव शोकापनुदेन पुत्री॥

धाम आगत इतिवत् कोस्तत्त्वेषूपचारः।

कलाश्चतुःषष्टिकलाः। नतमरातिबलं यस्मात्। पक्षे चणदा रात्रिः। कुमुदं कैरवम्। कलाः षोडश कलाः। न तारा नक्षत्राण्यतिबला यस्मात्। मित्रं सुहृत्। किञ्च। चकारो वार्थे। कां वा शोभां न बिभ्रत्। अचला स्थिराधिका लक्ष्मीर्यस्य। पक्षे मित्रः सूर्यः।

काञ्चनं सुवर्णम्। अचलेभ्यः पर्वतेभ्योऽधिका लक्ष्मीर्यस्य।

त्वाधिकलक्ष्मीः सुमेरुरिव। यस्य च रिपुवर्गः सदापार्थोऽपि न महाभारतरणयोग्यः।

भीष्मोऽप्यशान्तनवेहितः सानुचरोऽपि न गोत्रभूषितः।

---

अथ मित्रं सखा सुहृत्। सुमणिसरणिर्मित्र इत्युभयत्रामरः।

पुनर्विरोधाभासेनाह। पार्थोऽर्जुनस्तस्य महाभारतरणयोग्यतानिषेधो विरोधः। एवमग्रेऽपि। पक्षे यस्य रिपुवर्गो महतो भारस्य तरणे योग्योऽपि न। अतएव सदा सर्वकालेऽपार्थः। अपगतोऽर्थः प्रयोजनं यस्य।

भीष्मोऽपि शन्तनुपुत्रोऽपि। अशान्तनवे पितृभिन्नाय हितः। पित्रे न हित इति विरोधः। भीष्मो राजगुणैर्भयानकः। तथा च कालिदासः।

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।
अधृष्यश्चाधिगम्यश्च यादोरत्नैरिवार्णवः॥ इति।

दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्।

इत्यमरः। अशान्तमनस्तमितं नवं स्तुत्यमीहितं चेष्टितं यस्य। णु स्तवने। ऋदोरप्। यद्वा। नवं नवीनमन्येभ्यो विलक्षणम्। शन्तनुवाचकः शब्दो दीर्घादिः शान्तनुरित्यप्यस्ति। तथा च त्रिविक्रमभट्टः। शान्तनुतनय इति। तत्र शान्तनोस्तनयः शान्तनुतनय इत्येकोऽर्थः। पक्षे शान्तो नुतो नयो यस्येति।

सानुषु शिखरेषु चरति तादृशोऽपि न गोत्रभूमौ पर्वतभूमावुषितः स्थित इति विरोधः। अनुचरैः सेवकैः सहितः।

अपिच स चित्रकुरिव न सत्पथस्खलितः शङ्करोऽपि न विषादी पावकोऽपि न कृष्णवर्त्माश्रयाशोऽपि न दहनो नान्तक

---

न गोत्रैर्गोत्रजैर्भूषित इति परिहारः। स्वयमेव तेषां भूषक इत्यर्थः। नञर्थकनशब्देन सुप् सुपेति समासः।

चित्रकुरिव नक्षत्रपथस्खलितः। नक्षत्रपथ आकाशे। पक्षे सत्पथात् सद्धर्मात्।

शङ्करः शिवो विषादी विषभक्षको नेति विरोधः। शङ्करः सुखकरः। न विषादी न दुःखीति परिहारः।

पावकोऽग्निरपि न कृष्णवर्त्मा नाग्निरिति विरोधः। पावकोऽन्येषां पवित्रकर्ता न कृष्णवर्त्मा न दुराचार इति परिहारः। वह्निः शुष्मा कृष्णवर्त्मा। कृशानुः पावकोऽनल इत्युभयत्रामरः।

कृष्णवर्त्मा हुताशे स्याद्दुराचारे विधुन्तुदे।

इति विश्वप्रकाशः।

आश्रयाशोऽपि वह्निरपि न दहनो न वह्निरिति विरोधः। आश्रयाणामाशा तृष्णा यस्मिन्नाश्रयाशः। न दहनो नेष्टानां सन्तापक इति परिहारः। आश्रयाशो बृहद्भानुः। दहनो हव्यवाहन इत्युभयत्रामरः।

नान्तक इव यम इवाकस्मात् सहसापहृतं जीवनं जीवितं येन। पक्षे जीवनं जीविका। करणे ल्युट्।

न राहुरिव मित्रमण्डलग्रहणेन सूर्यमण्डलग्रहणेन विव-

इवाकस्मादपहृतजीवनो[1] न राहुरिव मित्रमण्डलग्रहणावि-वर्धितरुचिर्न नल इव कलिविघटितो न चक्रीव शृगाल-वधस्तुतिसमुल्लसितो नन्दगोप इव यशोदयाश्रितो[2] जरा-सन्ध इव घटितसन्धिविग्रहो भार्गव इव सदानभोगो दशरथ

---

र्द्धिता रुचिर्दीप्तिर्यस्य सः। पक्षे सुहृद्राज्यग्रहणे विवर्द्धिता रुचिरिच्छा येन।

न नल इव कलिना युगविशेषेण विघटितो व्याप्तः। पक्षे कलिः कलहः।

न चक्रीव कृष्ण इव शृगालस्य राजविशेषस्य वधेन मारणेन स्तुत्या समुल्लसितः। पक्षे शृगालः कातरः।

शृगालो जम्बुके भीरुशूरे वै पार्थिवान्तरे।

इति विश्वः। कोशे दानवान्तर इति पाठस्त्वशुद्ध एतन्मूलक एव जगद्धरभ्रमः।

नन्दगोप इव यशोदया तन्नामनिजस्त्रियान्वितः। पक्षे यशसा दयया च।

जरासन्ध इव घटितसन्धिर्विग्रहः शरीरं यस्य। घटितौ सन्धिविग्रहौ येन।

भार्गव इव शुक्र इव सदा सर्वदा नभोग आकाशगामी पक्षे दानभोगाभ्यां सहितः।

---

१ -पहृतजीवन A -पहृतजीवनो D २ -न्वितो C E F H इति जग० च। -नन्दितो D

इव सुमित्रोपेतः सुमन्त्राधिष्ठितश्च दिलीप इव सुदक्षिणानुरक्तो[1] रक्षितगुश्च राम इव जनितकुशलवयोरूपोत्कर्षः ।

तस्य च पारिजात इवाश्रितनन्दनो हिमालय इव जनि-

---

दशरथ इव सुमित्रया लक्ष्मणजनन्योपेतो युक्तः । सुमन्त्र-नामकसारथिनाधिष्ठित आश्रितश्च । पक्षे सुमित्रेणोत्तमसुहृदा सुमन्त्रेण शोभनगुप्तवादेन ।

दिलीप इव सुदक्षिणायां तन्नाम्न्यां स्त्रियामनुरक्त आसक्तः । रक्षिता पालिता गौर्वासिष्ठी येन तादृशश्च । पक्षे सुदक्षिणायां पात्रे दानव्यये रक्षिता गौः पृथ्वी वाणी वा येन ।

स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।
लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः ।

इत्यमरः । राम इव जनितः कुशलवयसा रूपस्य सौन्दर्यस्योत्कर्ष आधिक्यं यस्मिन् । पक्षे रामे यथा रूपोत्कर्षस्तथा जनितकुशलवयोः । विभक्तिश्लेषोऽयम् । नीलोत्पलस्पर्धिनी नेत्रे तनुर्वा हरेरितिवत् । तथा च कालिदासः ।

रूपं तदोजस्वि तदेव वीर्यं
तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वाद्विभिदे कुमारः
प्रवर्तितो दीप इव प्रदीपात् ॥ इति ।

तस्य पुत्रः कन्दर्पकेतुर्नामेति सम्बन्धः ।

---

१ -नुरक्तो C

तश्शिवो मन्दर इव भोगिभोगाङ्कितः कैलास इव महेश्वरो-पभुक्तकोटिर्मधुरिव नानारामानन्दकरः क्षीरोदमथनोद्य-

---

पारिजातो देववृक्षः।

पञ्चैते देवतरवो मन्दारः पारिजातकः।

इत्यमरः। आश्रितं नन्दनमिन्द्रवनं येन। नन्दनं वनमितीन्द्रप्रकरणेऽमरः। पक्ष आश्रितान् नन्दयति तादृशः।

हिमालयो हिमवान्। जनितोत्पादिता शिवा गौरी येन। शिवा भवानी रुद्राणीत्यमरः। पक्षे शिवं सुखम्। श्वः श्रेयसं शिवं भद्रमित्यमरः।

मन्दर इन्द्रकीलः। भोगी सर्पः। भोगः शरीरम्। पक्षे भोगी सुखी। भोगः स्त्र्यादिसम्भूत इः। उरगः पन्नगो भोगी।

भोगः सुखे स्त्र्यादिभृतावहेस फणकाययोः।

इति चतुर्थ्वमरः।

कैलासः पर्वतः। महेश्वरः शिवः। कोटिरग्रम्। कोटिरग्रे प्रकर्षे चेति धरणिः।

रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः।

इति हैमः। शिवः शूली महेश्वर इत्यमरः। पक्षे महेश्वरैर्महाराजैरुपभुक्ताः कोटयस्तत्सङ्ख्यकानि धनानि यस्य।

कोटिः स्त्री धनुषोऽग्रे स्यात् सङ्ख्याभेदप्रकर्षयोः।

इति विश्वः।

मधुर्वसन्तः। नानारामा अनेकोपवनानि तेष्वानन्दकर्ता।

तमन्दर इव मुखरितभुवनो रागरज्जुरिवोल्लासितरतिरीशान-भूतिसञ्चय इव सन्ध्योच्छलितः शरच्चेव इवावदातहृदयो

---

आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।

इत्यमरः। अथ पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च मधुरिति विश्वः। पक्षे रामाः स्त्रियः। सुन्दरी रमणी रामेत्यमरः।

क्षीरोदः क्षीरसमुद्रः। उदकस्योदः संज्ञायामित्युदकस्योदादेशः।

रत्नाकरो जलनिधिर्यादसां पतिरप्पतिः।
तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे॥

इत्यमरः। मन्दरो मन्थाचलः। मुखरितं शब्दायमानं भुवनं जलं येन।

पयः कीलालममृतं जीवनं भुवनं वनम्।

इत्यमरः। इन्द्रकीलस्तु मन्दर इति हेमचन्द्रः। पक्षे भुवनं जगत्। विष्टपं भुवनं जगदित्यमरः। अस्मिन् पक्षे जयशब्दघोषणयेति शेषः।

रागरज्जुः कामः।

कन्दर्पो दर्पकः कामः शिखिस्त्युर्ध्यावहः।
सर्वधर्ममनोहारी रागरज्जुः प्रकीर्तितः॥

इत्युत्पलिनी। रतिः कामपत्नी। पक्षे रतिरनुरागः।

ईशानः शिवः। शर्व ईशानः शङ्कर इत्यमरः। भूतिर्भस्म। भूतिर्भस्मनि सम्पदीत्यमरः। सन्ध्यासूच्छलितः। पक्षे सम्यगध्या-

विष्णुपदावलम्बी च पार्थ इव समरसाहसोचितः कंस इव

---

यतीति सन्ध्याः। आतश्चोपसर्ग इति कः। सन्ध्यः सम्यग्विचार-कर्ता। अत एवाच्छलितः केनापि छलितुमशक्यः। तदस्य सञ्जातमिति छलशब्दादितच्।

शरत्कालिकमेघ इवावदातहृदयः। जलसम्बन्धप्रतिभास-मानमैल्यरहितान्तःप्रदेशः। विष्णुपदावलम्बी। आकाशावलम्बी।

वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी।

इत्यमरः। पक्षेऽवदातहृदयः शुद्धान्तःकरणः। हृदयं स्वान्तं हृन्मानसं मन इत्यमरः। दैप् शोधने। क्तः। आदेच इत्यात्वम्। विष्णुपदं हरिचरणम्।

पार्थोऽर्जुनः समरे सङ्ग्रामे साहसं तत्रोचितो योग्यः। पक्षद्वये समोऽर्थः। यद्वा। रसोऽनुरागः। आहसः स्मितम्। आङीषदर्थे। समाभ्यां सर्वजनतुल्याभ्यां रसाहसाभ्यामुचितो योग्यः। धर्मराज इव समवर्तीत्यर्थः। अथो हसः। हासो हास्यं चेत्यमरः।

कंसस्तन्नामा दैत्यः १° कुवलयापीडस्तद्धस्ती। पक्षे कोर्वलय इवापीड इव कुवलयापीडः पृथ्वीमण्डनायमान इति यावत्। ताम्बूलेन भूषितः।

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय॥

कुवलयापीडभूषितस्तार्क्ष्य इव विनतानन्दकरः सुमुखनन्दनस्य विष्णुरिव क्रोडीकृततनुः शान्तनव इव स्ववशस्थापितकाल-

---

हृतिवत्। कटको वलयोऽस्त्रियाम्। शिखास्वापीडशेखरावित्यु-भयत्रामरः।

तार्क्ष्यो गरुडो विनता तन्माता तदानन्दकरः। गरुत्मान् गरुडस्तार्क्ष्यो वैनतेय इत्यमरः। पक्षे विनतानां नम्राणामा-नन्दकरः।

सुमुखाः पण्डितास्तेषां हर्षकर्ता। पक्षे सुमुखो गरुडपुत्रः स नन्दनः पुत्रो यस्य सः।

विष्णुरिव क्रोडीकृता शूकरीकृता शोभना तनुः शरीरं येन। च्व्यन्तः क्रोडशब्दः। क्रोडः शूकरमातङ्गोरिति विश्वप्र-काशः। स्त्रियां मूर्तिस्तनुस्तनूरित्यमरः। पक्ष क्रोडीकृतात्मसात्-कृता सुतनुर्येन। आश्रीभवत् तात्स्यात् ताच्छब्द्यम्। उत्सङ्ग-शूकरौ क्रोडाविति पादशेषाकाधिकारेऽनेकार्थध्वनिमञ्जरी। यद्वा क्रोडीकृतालिङ्गिता सुतनुर्येन।

आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम्।
अङ्कपालिः परीरम्भः क्रोडीकृतिः।

इति हैमः।

शान्तनवो भीष्मस्तद्वत् स्ववशे स्थापितः कालधर्मो मृत्युर्येन।

स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः।

इत्यमरः। पक्षे कालस्य धर्मः। तथाच व्यासः।

धर्मः कौरवव्यूह इव सुशर्माधिष्ठितः सुबाहुरपि रामानन्दी समदृष्टिरपि महेश्वरो मुक्तामयोऽप्यतरलमध्यो जलद इव

---

कालो वा कारणं राज्ञो राजा वा कालकारणम्।
इति ते संशयो माभूद्राजा कालस्य कारणम॥

राजा धर्मस्य कारणमिति स्मृतिः।

कौरवव्यूहे सुशर्मा नाम योद्धा। पक्षे सुशर्मणातिसुखेनाधिष्ठितः। शर्मशातसुखानि चेत्यमरः।

पुनर्विरोधाभासेनाह। सुबाहुस्तन्नामको राक्षसः। रामो दाशरथिः। सुबाहुराक्षसस्य रामानन्दकर्तृत्वं विरोधः। अत्रापिनापाततो विरोधः। पक्षान्तरेण परिहारः। सुबाहुः शोभनभुजः। रामाः स्त्रिय आनन्दयति तच्छील इति परिहारः। भुजबाहू प्रवेष्टो दोः। सुन्दरी रमणी रामेत्युभयत्रामरः।

समदृष्टिः। अविषमदृष्टिः। महेश्वरः शिवः। शिवः शूली महेश्वर इत्यमरः। शिवः समदृष्टिरिति विरोधः। पक्षे समदृष्टिः सर्वजनेषु समानदर्शनः। महेश्वरो महाराजः। स्वामी त्वीश्वरः पतिरीशितेत्यमरः।

मुक्तामयो मौक्तिकप्रचुरः। तत्प्रकृतवचने मयट्। अतरलमध्यः। तरलो हारमध्यमणिस्तद्रहितो मध्यो यस्य। हारस्यातरलमध्यता विरोधः। तरलो हारमध्यग इत्यमरः। अत्र मध्यशब्दप्रयोगस्तु येभ्यो निवापाञ्जलयः पितॄणामित्यादिवद्बोध्यः। वस्तुतस्तु मध्यशब्दरहितः पाठः। मुक्तामयो नीरोगः।

विमलतरवारिधाराशासितराजहंसो¹ वंशप्रदीपोऽप्यक्षतदश-
स्तनयः कन्दर्पकेतुर्नाम ।

येन च चन्द्रेणेव सकलकलाकुलगृहेण ²शर्वरीतिच्छारिणा

---

अतरलो धीर इति परिहारः। पराङ्गनासु पराङ्मुख इत्यर्थः। रोगव्याधिगदामयाः। चपलं तरलं चैवेत्युभयत्रामरः।

जलदो मेघः। विमलतरयातिस्वच्छया वारिधारया वासिता राजहंसा येन।

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।

इत्यमरः। उपलक्षणे तृतीया। पक्षे विमलस्तरवारिः खड्गस्तदीयधारया शासिता राजान एव हंसा येन।

करवालनिस्त्रिंशकृपाणखड्गा-
स्तरवारिकौक्षेयकमण्डलाग्राः।

इति हैमः।

खड्गादीनां च निशितमुखे धारा प्रकीर्तिता।

इति विश्वः।

वंशप्रदीपः। वंशे वेणौ प्रदीप आकाशदीपः। अक्षता-दग्धा दशावर्तिर्यस्य दीपस्यादग्धवर्तिता विरोधः। पक्षे वंशप्रदीपः कुलदीपः। अक्षतानष्टा दशावस्था यस्य। दशा वर्तिर्दशा वय इति हारावली। द्वौ वंशौ कुलमस्करौ। दशावस्थानेकविधा इत्युभयत्रामरः।

---

१ इति आग० च। -हंसमण्डलो C E F G H इति मर० च। २ शर्वरी-विच्छा- C शर्वरीतिमिरच्छा H

दलितकैरवेण कुमुदवनबन्धुना प्रसाधिताशेन विलोकिता जलधय [1]इवोल्लसितगोत्राः [2]सुदूरविवर्द्धितजीवनाः प्रसन्नसत्त्वाः

---

श्लेषेणाह । येन कन्दर्पकेतुना चन्द्रेणेव सकलकलाकुलगृहेण पुनरुक्तोऽसौ श्लेषः ।

शर्वरीतिहारिणा शर्वर्या रात्रेरीतिरिवेतिर्दुःखदत्वात् तमस्तद्धारिणा तन्नाशकेन ।

दलितकैरवेण विकासितकुमुदेन । प्रसाधिता अलङ्कृता आशा दिशो येन तादृशेन विलोकिता दृष्टा जलधय इव समुद्रा इवोल्लसितगोत्रा उल्लसितपर्वताः सुदूरविवर्धितजीवना दूरप्रवृद्धजलाः प्रसन्नसत्त्वाः प्रसन्नजन्तवः सन्तः परामुत्कृष्टां वृद्धिमवापुः ।

सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे ।

इति वैजयन्ती । अथ शर्वरी निशा निशीथिनी रात्रिः । प्रसाधितोऽलङ्कृतश्च । आशाश्च हरितश्च ताः । सिते कुमुदकैरवे । अद्रिगोत्रगिरिग्रावा । जीवनं भुवनं वनम् । कबन्धमुदकं पाथ इति षट्स्वमरः । अर्थान्तरे शर्वस्य शिवस्य रीतिः सम्प्रदायस्तेन हारी मनोहरः । दलितानि नाशितानि कैरवाणि शत्रवो येन । प्रकर्षेण साधिता आशा अर्थिनामभिलाषा येन । साध संसिद्धौ । उल्लसितगोत्राः प्रसिद्धवंशाः । सुदूरमायतं विशेषेण

---

१ इवोल्लासित- A C D E F H इति नर० च । २ सुदूरवर्द्धि- B C D G H

सन्तः परां वृद्धिमवापुः। यस्य च जनितानिरुद्धलीलस्य रति-प्रियस्य कुसुमशरासनस्य मकरकेतोरिव दर्शनेन वनिता-जनस्य हृदयमुल्ललास। यस्मै चानुगतदक्षिणसदागतये[1] श्रुतिसुखदकोमलकोकिलरुताय विकासितपल्लवाय कृतका-

---

वर्धितं जीवनमयमेनेति जीवनं जीविका येषाम। प्रसन्नसत्त्वाः प्रस-न्नस्वभावाः। सन्तः कोविदाः।

कैरवी चन्द्रिका प्रोक्ता कैरवं कुमुदे द्विषि।

सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः॥

इत्युभयत्रापि विश्वः। सन् सुधीः कोविदो बुध इत्यमरः।

यस्य कन्दर्पकेतोर्जनितोत्पादितानिरुद्धस्योषापतेर्लीला विलासो येन तस्य दर्शनेन वनिताजनस्य हृदयमुल्लासोल्लासं प्राप्तम्। अनिरुद्ध उषापतिः। लीला विलासक्रिययोरित्युभ-यत्रामरः। पक्षे जनितानिरुद्धलीलस्योत्पादितानिवारितवि-लासस्य। रतिप्रियस्य। अनुरागवल्लभस्य। कुसुमशरं कामम-स्यति क्षिपत्यतिसुन्दरत्वात् तादृशस्य। असु क्षेपणे।

स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा।

हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः॥

इत्यमरः।

श्लेषोपमासङ्करेणाह। वसन्तायेव यस्मै तरुण्यः स्पृहयाञ्चक्रु-रिति सम्बन्धः। स्पृहेरीप्सित इति सम्प्रदानसञ्ज्ञा। अनुगतो द-

---

१ × नेच- A B C D E F H इति जम० च गर० च।

न्तारतरङ्गाय सुरभिसुमनोऽभिरामाय सर्वजनसुलभपद्माय
[1]विस्तारितकनकसम्पदेऽतिक्रान्तदमनकाय वसन्तायेव वन-

---

लिप्तसदागतिर्दक्षिणमारुतो यं तस्मै। श्रुतिसुखदं कोमलं कोकिलरुतं पिकशब्दो यत्र तस्मै। हतः कान्तारस्य काननस्य तरङ्गः कम्पनं येन। विकासिताः पल्लवाः किसलयानि येन। सर्वजनानां सुलभं पद्मं यत्र। विस्तारिता कनकस्य धत्तूरस्य चम्पकस्य वा सम्पद्येन। अत एव सुरभयः सुगन्धयः सुमनसः पुष्पाणि ताभिरभिरामः सुन्दरः। अतिक्रान्तो दमनकः पुष्पविशेषो येन। शिशिरजत्वात् तस्यातिक्रम इति भावः। वनलता इवोत्कलिकासहस्रेणोद्गतकोरकसहस्रेण समाकुला व्याप्ताः। भ्रमरैर्मधुपैः सङ्कुलाः। प्रवालेन नवपल्लवेन हारिणो मनोहराः। विलसद्द्वयसो विलसत्पक्षिणः। वायुर्मातरिश्वा सदागतिः। श्रुतिः स्त्री श्रवणं श्रवः। कोकिलः पिक इत्यपि। तिरश्चां वासितं रुतम्। पल्लवोऽस्त्री किसलयम्। वा पुंसि पद्मं नलिनम्। धत्तूरः कनकाह्वयः। सुरभिर्घ्राणतर्पणः। इष्टगन्धः सुगन्धिः स्यात्। स्त्रियः सुमनसः पुष्पम्। कलिका कोरकः पुमान्। षट्पदभ्रमरालयः। प्रवालमङ्कुरेऽप्यस्त्री। खगबाल्यादिनोर्वयः। इति चतुर्दशसमरः। कान्तारः कानने पथि।

कनकं चम्पके हेम्नि धत्तूरेऽपि निगद्यते।

इत्युभयत्र विश्वः। दमनो वीरपुष्पयोरिति धरणिः। पद्येऽनु-

---

१ ·।विष्कृत- D

लता इवोत्कलिकासम्बन्धसङ्कुला भ्रमरसङ्गताः [१]प्रवालहारिण्यो विलसद्वयसस्तरुण्यः सूचयाञ्चक्रुः। यस्य च समरभुवि

---

गतानां दक्षिणानामुदाराणां सदा सर्वदा गतिरागमनं तस्मै। तादर्थ्ये चतुर्थी। यद्वानुगताः सेवका दक्षिणा व्यवहारकुशलाः सन्तस्तु तेषामागतिरा साकल्येन गतिर्निर्वाहो यस्मात्। त्रिविधस्यापि जनस्य पालनकर्तेत्यर्थः। श्रुतिसुखदं कोमलं कोकिलवद्रुतं शब्दो यस्य तस्मै। रु शब्दे। क्तः। हतः कान्तानां स्त्रीणां रतरङ्गः सुरतरङ्गो येन। अतएव विकासितः पल्लवः शृङ्गारो येन। अतएव सुरभिसुमनोभिः सुगन्धिपुष्पैरभिरामः। यद्वा सुरभयः ख्याताः सुमनसः पण्डितास्तैः। सर्वजनानां सुलभा पद्मा लक्ष्मीर्यस्य। विस्तारिता कनकस्य सुवर्णस्य सम्पद्येन। अतिक्रान्ता दमनका वीरा येन। यद्वा दमयतीति दमनः प्रभुः। उत्कलिका उत्कण्ठास्तासां सम्बन्धेन सङ्कुलाः। भ्रमरैः कामुकैर्लम्पटालकैर्वा सङ्गताः। प्रवालो विद्रुमः। हारो मुक्तावली। तौ स्तो यासां ताः। यद्वा प्रकृष्टा वालाः केशास्तैर्हारिण्यो मनोहराः। विलसद्वयो यौवनं यासां ताः। दक्षिणे सरलोदारौ। मैथुनं निधुवनं रतम्। लक्ष्मीः पद्मालया पद्मा। स्वर्णं सुवर्णं कनकम्। उत्कण्ठोत्कलिके समे। अथ विद्रुमः पुंसि प्रवालः पुंनपुंसकम्। चिकुरः कुन्तलो वालः। हारो मुक्तावली। इत्यप्यमरः।

---

१ प्रवालमनोहरा- A B G इति नर० च।

भुजदण्डेन कोदण्डं कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन चाननुभूतपूर्वो नायको नायकेन कीर्तिः कीर्त्या च सप्त सागराः सागरैः कृतयुगादिराजचरितस्मरणमनेन च स्थैर्यममुना च प्रतिक्षणमाश्चर्यमासादितम्। यस्य च प्रतापानलदग्धानां रिपुसुन्दरीणां करतलताडनभीतै-

---

पल्लवः स्यात् किसलये विटङ्कभट्टङ्कारयोरपि।
सुरभिः सौरभे ख्याते वसन्ते पण्डितेऽपि च।
भ्रमरः कामुके भृङ्गललाटालकयोरपि।

इति त्रिषु विश्वः।

वयो बाल्यादि पक्षी च यौवनं च क्वचिद्वयः।

इति शाश्वतः।

मालादीपकमाह। यस्य कन्दर्पकेतोः समरभुवि रणाङ्गणे भुजदण्डेन कोदण्डं धनुः समासादितम्। अत्र यथायथं लिङ्गव्यत्ययो वचनव्यत्ययश्च। शरासनकोदण्डकार्मुकमित्यमरः।

पूर्वं नानुभूतोऽननुभूतपूर्वस्तादृशो नायकः कन्दर्पकेतुः। कृतयुगादिराजानां प्रियव्रतसगरादीनां चरितं स्वेनैव तेजसा लोकप्रकाशनादि तत्स्मरणं स्मरणेन स्थैर्यं स्थैर्येणाश्चर्यम्। स्मरणस्याशुविनाशित्वात्।

मालादीपकमाद्यं चेद्यथोत्तरगुणावहम्।

यस्य कन्दर्पकेतोः प्रतापानलदग्धानां रिपुसुन्दरीणां कर-

रिव मुक्ताहारैः पयोधरपरिसरो मुक्तः। यस्य च [1]निशि-
तनाराचजर्जरितमत्तमातङ्गकुम्भस्थलविगलितमुक्ताफलनिक-
रदन्तुरितपरिसरे[2] [3]पतत्पत्त्रथे [4]रक्तवारिसञ्चरदनेकच्छा-
योत्पलपुण्डरीकवाहिनीशतसमाकुले नृत्यत्कबन्धे सुरसुन्द-

---

तलेन ताडनं पत्युर्मरणोत्तरमुरस्ताडनं तेन भीतैरिव मुक्ता-
हारैः पयोधरपरिसरो मुक्तः। उत्प्रेक्षालङ्कारः। सम्भावना
स्यादुत्प्रेक्षेति लक्षणात्। पर्यन्तभूः परिसर इत्यमरः।

यस्य कन्दर्पकेतोः समर एव सागरस्तस्मिन् खड्गो रराजे-
त्यन्वयः। निशितनाराचैस्तीक्ष्णबाणैर्जर्जरितानि शिथिलावय-
वानि यानि मत्तमातङ्गकुम्भस्थलानि तेभ्यो विगलितैः स्रस्तै-
र्मुक्ताफलनिकरैर्दन्तुरितो दन्तुरवदाचरितः परिसरो यस्य
तस्मिन्। दन्ता उन्नत उरच्। उन्नता दन्ता अस्य दन्तुरः।
तस्मादाचारे क्विप्। क्तः। इट्। यद्वा। दन्तुरं विषमान्तरं
तद्वदाचरितम्।

दन्तुरं वाच्यवद्विद्याद्दन्तुरे विषमान्तरे।

इति विश्वप्रकाशः।

पतत्पत्त्रथे पतद्वाणे। रक्तमेव वारि जलं तत्र सञ्चरदने-
कच्छायमनेककान्ति उद्गतं पलं मांसं यस्मात् उत्पलं मांसशून्यं

---

१ निशितनाराचराजिज- A B D F इति नर० च। निशितनाराचच-
ञ्ज- E २ -फलदन्तुरितपरिसरे C D F H ३ तरत्प- A B D H ४ इति
जग० च नर० च। रक्त० -नेककच्छप उत्फुल्लपु- A रक्तवारिज० -योत्फुल्लपु- B
रक्तवारिज० -द्बहलकच्छपे उत्फुल्लपुण्डरीके वा- C रक्त० -द्बहलकच्छपे उत्फुल्लपु- E
रक्तवारिज- F रक्त० -योत्फुल्लपु० H

रीसमागमोत्सुकचारुभटाहङ्कारसम्भारभीषणे समरसागरे[1] भिन्नपदातिकरितुरगरुधिरार्द्रजयलक्ष्मीपाद्दालक्तकराग रञ्जित इव खङ्गो रराज।

---

तत्र पुण्डरीकं सितच्छत्रं च यत्र तादृशं यदाहिनीशतं सेनाशतं तेन समाकुले। नृत्यत्कबन्धे नृत्यच्छिन्नमस्तकवीरे। सुरसुन्दरीणामप्सरसां समागमोत्सुकानां चारुभटानां योधानामहङ्कारोऽहमहमित्यस्य सम्भारस्तेन भीषणे। वषट्कार इति निर्देशात् समुदायादपि कारः। यद्वाहङ्कारस्य गर्वस्य सम्भारेण भीषणे। भटा योधाश्च योद्धारः।

कबन्धोऽस्त्री क्रियायुक्तमपमूर्ध कलेवरम्।

इति द्वयोरमरः।

तरङ्गिण्यां च सेनायां वाहिनी परिकीर्तिता।

इति विश्वः। उत्पलं कुष्ठकुवले। इन्दीवरे मांसशून्य इति हैमः।

पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे।

इति विश्वप्रकाशः। पत्त्ररथो बाणपक्ष इति धरणिः। पक्षे पत्त्ररथः पक्षी। उत्पलमिन्दीवरम्। पुण्डरीकं सिताम्भोजम्। कबन्धं जलम्। वाहिनी नदी। कबन्धमुदकं पाथ इत्यमरः। सुरसुन्दरी मत्स्यभेदश्चारुभटोऽपि। छेकानुप्रासार्थोपमाक्षेपरूप-

---

१ -वरपि A B E -भिरपि C

अथ कदाचिदवसन्नायां यामवत्यां दधिधवले कालक्षपणकग्रासपिण्ड इव निशायमुनाफेनपुञ्ज[1] इव मेनकानखमार्जनशिलाशकल इव मधुच्छत्रच्छायमण्डलोदरे पश्चिमाचलोपधानसुखनिलीनशिरसो[2] राजतताटङ्क[3] इव शेषमधुभाजि

---

कोत्प्रेक्षालङ्काराणां यथासम्भवं सङ्करसंसृष्टी। ओजो गुणः। वैदर्भी रीतिः।

अथानन्तरं स इति शेषः। कन्दर्पकेतुः कदाचिदवसन्नायां समाप्तायां रजन्यामष्टादशवर्षदेशीयाम्। ईषदसमाप्तौ कल्पब्देश्यदेशीयर इति देशीयः। ईषदसमाप्ताष्टादशवर्षां कन्यां स्वप्नेऽपश्यदित्यन्वयः। अवसन्नायामित्यनेन स्वप्नस्य शीघ्रफलदत्वं ध्वनितम्। तदुक्तं गुरुणा।

अरुणोदयवेलायां दशाहेन फलं भवेत्।

इति। एतादृशे कुमुदिनीनायके चन्द्रेऽपरजलधिपयसि पश्चिमसमुद्रजले मज्जति सतीत्यन्वयः।

काल एव क्षपणकस्तस्य दधिधवले ग्रासपिण्ड इव। क्षपणकस्य भक्षणार्थं दधिधवलः पिण्डो दीयत इति प्रसिद्धम्। निशा रात्रिः सैव यमुना तस्याः फेनपुञ्ज इव। मेनकानखक्षालनार्थं शिलाशकले झांवां इति भाषायाम्। मधुच्छत्रस्य छाया मधुच्छत्रच्छायम्। विभाषा सेनेति क्लीबत्वम्। तदेव मण्डलोदरं

---

१ -क्षपक A B C D E F G H   २ -कालशिरसो A D इति नर० च। -कालविलासिनो C H -कालविलासिन्या F   ३ -ताडङ्कपत्र A B D -ताडङ्क C

चषक इव विभावरीवध्वा अपरजलधिपयसि शशङ्ककान्तिकामुके मज्जति कुमुदिनीनायके [1]शिशिरकर्दमितकुमुदधूलिमध्यबद्धचरणेषु[2] षट्चरणेषु [3]कलप्रलापबोधितचकिताभिसारिकासु सारिकासु प्रबुद्धाध्ययनकर्मठेषु मठेषु [4]विभासरागमुखरकार्पटिकजनोपगीयमानकाव्यकथासु[5] रथ्यासु

---

मण्डलमध्यो यस्य तस्मिन्। पश्चिमाचलोऽस्ताद्रिः स एवोपधानं शिरोऽवलम्बनं तच सुखेन निलीनं स्थितं शिरो यस्यास्तस्या विभावरीवध्वा रात्रिस्त्रिया राजतताटङ्क इव रौप्यकर्णभूषणविशेष इव ठेंठी इति भाषायाम्। तस्या एव शेषमधुभाजि पीतशेषमद्यसहिते चषके पानपात्र इव। शशङ्ककान्तेः कामुकेऽभिलाषुके तुल्ये वा। चषकोऽस्त्री पानपात्रम्। उपधानं तूपबर्हः। कामुके कमितानुक इत्यमरस्त्रिषु। उत्प्रेक्षालङ्कारः।

शिशिरेण तुषारेण कर्दमितः कर्दमवदाचरितः कुमुदधूलिस्तन्मध्ये बद्धाश्चरणा येषां तादृशेषु षट्चरणेषु भ्रमरेषु।

शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्।

इति विश्वप्रकाशः। षट्पदभ्रमरालय इत्यमरः।

कलप्रलापोऽव्यक्तमधुरध्वनिस्तेन बोधिता अतएव चकिता अभिसारिका याभिस्तासु सारिकासु।

---

१ शि॰ -कुमुदवन- A B शि॰ -कुसुम- F २ -परागमध्य॰ A B C D E F G H इति अम॰ च। ३ क॰ -प्रबो- A B F G क॰ -विबो- H क॰ -निबो- इति अग॰। ४ विभासमानमु- F H ५ -कार्पडिकोपगीय॰ D F H इति नर॰ च।

[1]सकलनिपीतनिशातिमिरमतितनीयस्तया [2]वोढुमसमर्थेष्विव कज्जलव्याजादुद्वमत्स्विव कामिमिथुननिधुवनलीलादर्शनार्थमिवोद्ग्रीविकाशतदानखिन्नेषु विविधबन्धरतक्रीडा-

---

कान्तार्थिनी तु या याति सङ्केतं साभिसारिका ।

इत्यमरः । सारिकाशब्दस्तालव्यादिर्दन्त्यादिश्च । तदुक्तमूष्मभेदे ।

स्त्रीलिङ्गोऽयं शारिः शकुनिविशेषे तु दन्त्यतालव्यः ।

इति ।

प्रबुद्धा अध्ययनकर्मठा अध्ययनशीला येषु तादृशेषु मठेषु छात्रादिनिलयेषु । कर्मणि घटोऽठजित्यठच् प्रत्ययः । कर्मशूरस्तु कर्मठः । मठश्छात्रादिनिलय इति द्वयोरमरः ।

विभासेन रागविशेषेण मुखरितकार्पटिकजनैर्वस्त्रयाचकभिक्षुभिः कपडिया इति भाषाप्रसिद्धैरुपगीयमाना काव्यकथा यासु तादृशीषु रथ्यासु प्रतोलीषु । गानेऽनतिपाटवं ध्वनयितुं मुखरशब्दप्रयोगः । रथ्या प्रतोली विशिखेत्यमरः । यमकालङ्कारः ।

प्रदीपेष्वेवं विधेषु सत्स्वित्यन्वयः । अतितनीयस्तयातिकृशत्वेन सकलं निपीतं निशातिमिरं तद्वोढुमसमर्थेष्विव । निधुवनलीला सुरतक्रीडा । मैथुनं निधुवनं रतमित्यमरः । उद्ग्रीविका ग्रीवोन्नमनक्रिया तस्याः शतं तद्दानं विधानम् । विविधबन्धो मयूरादिबन्धो यत्र तादृशरतक्रीडानां साक्षिषु साक्षाद्द्रष्टृषु ।

---

१ स० -तिमिरपङ्क्तात- A B C D E H इति सर० च । २ वोढु- A B E F G H

साधुषु शरणागतमिवाधोलीनं तिमिरमवत्सु दुर्जनेष्विव दग्धस्नेहतया मन्दिमानमुपगतेष्वतिवृद्धेष्विव दशान्तमुपगतेषु विपन्नसदीश्वरेष्विव पात्रमात्रावशेषेषु दानवेष्विव

---

शरणागतमिवाधोलीनमधस्तालीनं तिमिरमन्धकारमवत्सु रक्षत्सु। तथाच वराहः।

नार्ता न भीता न हतानताश्च
विमुक्तशस्त्रा विपलायमानाः।
क्षीणायुधा वाजिगजावतीर्णा
स्त्रीते न वध्या न च पीडनीयाः॥
कुलैकतन्तुः शरणागतो वा
कृताञ्जलिर्यश्च वदेत् तवास्मि।

इति। उत्तरश्लोके वध्या इत्यादौ वचनविपरिणामः। शरणं गृहरक्षित्रोः। तमिस्रं तिमिरं तम इति द्वयोरमरः। उत्प्रेक्षालङ्कारः।

दुर्जनेष्विव दग्धस्नेहतया नष्टप्रेमत्वेन मन्दिमानं सुहृत्कर्मणि शिथिलताम्।

स्नेहोऽनुरागस्तैलञ्च तैलेऽपिच निगद्यते।

इति धरणिः। पक्षे स्नेहस्तैलम्। मन्दिमानमल्पतेजस्त्वम्। अतिवृद्धेष्विव दशान्तं वयसोऽन्तमुपागतेषु। पक्षे दशान्तं वर्तिकान्तम्। दशा वर्तिर्दशा वय इति हारावली। विपन्नसदीश्वरेष्विव सर्वस्वदानादिना प्राप्तदारिद्र्येष्विव। एतच्च सत्पदेन ध्व-

निशान्तमध्यचारिष्वस्तगिरिशिखरेष्विव [1]पतत्पतङ्गेषु [2]प्रदीपेष्वनवरतमकरन्दबिन्दुसन्दोहलुब्धमधुकरनिकुरम्बझङ्कारमुखरितेषु[3] म्लानिमानमुपगच्छत्सु वासागारकुसुमोपहा-

---

शितम्। पात्रमात्रावशेषेषु देहमात्रावशेषेषु तथाच कालिदासः।

शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः।

आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः॥

इति।

पात्रं तु भाजने योग्ये देहे तीरद्वयान्तरे।

इति मङ्गीपः। यद्वा पात्रममात्यः।

पात्रं स्रुवादौ पर्णे च राममन्त्रिणि चेष्यते।

इति विश्वप्रकाशः। पक्षे पात्रं भाजनम्। दानवेष्विव निशा रात्रिस्तस्या अन्तमध्ययोश्चरणशीलेषु। पक्षे निशान्तं गृहं तन्मध्यचारिषु। निशान्तवस्त्यसदनमित्यमरः। अस्तगिरिरस्ताचलस्तच्छिखरेष्विव। पतङ्गः सूर्यः। पक्षे पतङ्गाः शलभाः। पतङ्गः शलभादित्याविति विश्वः। अस्तस्तु चरमः क्ष्माभृदित्यमरः।

एतादृशेषु वासागारकुसुमोपहारेष्वित्यन्वयः। अनवरतं मकरन्दबिन्दुसन्दोहः पुष्परससमूहस्तत्र लुब्धमधुकराणाम-

---

१ परिपतत्पतङ्गेषु A प्रपतितपतङ्गेषु F २ प्र० -सन्दोहमोहलुब्धमधु- A प्र० -सन्दोहलुब्धमुग्धमधु- B D E G H प्र० -सन्दोहमोहमुग्धमदमुदितमधु- C प्र० -सन्दोहपानमोहमुग्धमधु- F ३ -करनिकरझ० A B D G -करनिकरनिकुरम्बझ० E

रेषु [१]विगलत्कुन्दैरलकैः प्रियविरहशोकाद्बाष्पबिन्दूनिवो-त्सृजतीषु[२] प्रियतमगमननिषेधमिव [३]कुर्वतीषु वाचाल-तुलाकोटिभिश्चरणपल्लवै रजनिशेषसुरतभरपरिश्रमवि[४]-

---

भिलाषुकभ्रमराणां निकुरम्बं यूथं तस्य झङ्कारेण रवविशेषेण मुखरितेषु शब्दायमानेषु। मन्दोदकविसरश्रजाः। लुब्धोऽभि-लाषुकस्तृष्णक्। निकुरम्बं कदम्बकमिति चिभ्रमरः।

एतादृशीषु प्रियतमास्वित्यन्वयः। विगलत्कुन्दैः पतत्कुन्द-कुसुमैरलकैः। करणे तृतीया। प्रियविरहेण भाविप्रियविरहेण शोकस्तस्माद्बाष्पबिन्दूनिवोत्सृजतीषु। अनेन दृष्टिर्ध्वनिता। अतएव प्रियगमननिषेधमिव कुर्वतीषु। तदाह नारदः।

अकालजेषु नृपतिर्विद्युद्गर्जितवृष्टिषु।
उत्पातेषु चिविधेषु सप्तरात्रं तु न व्रजेत्॥

इति। प्रवत्स्यत्पतिका नायिका।

प्रवत्स्यति प्रियतमे प्रवत्स्यत्पतिकेष्यते।

इति रसरत्नहारः। अनयोत्प्रेक्षयोः सङ्करः।

वाचालास्तुलाकोटयो येषु तादृशैश्चरणपल्लवैरुपलक्षितासु। उपलक्षणे तृतीया। क्वणितमनेन ध्वनितम्। व्याख्यापाकस्तु वाचालः।

पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्।

---

१ विगलितकु- C D २ -मुत्सृजद्भिरिव A B C D E F H ३ कुर्वद्भिर्वा- D F H ४ -सुरतपरि॰ C D E F H

H

[1]गलितकेशपाशदरदलितमालतीमालापरिमललुब्धमधुकर-[2]निकरपक्षानिलनिपीतनिदाघजलशीकरासूद्देशकुञ्जवल्लिक[3]-कूणज्झणत्कारमुखरासु[4] [5]नवनखपदसंसक्तकेशनिर्मोक[6]-

---

इति द्वयोरमरः।

रजनिशेषः पश्चिमयामकालस्तत्र सुरतभरस्तेन परिश्रमस्तेन विगलितः केशपाशः केशकलापस्तत्र दरदलितानामीषद्विकसितानां मालतीनां मालास्तासां परिमलो जनमनोहरो गन्धस्तल्लुब्धमधुकरनिकरपक्षानिलेन निपीताः शोषिता निदाघजलशीकरा अम्बुकणा यासां तासु। पश्चिन्यः स्त्रिय इमाः। यत्तु।

प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्।

इति तच्चिरत्वादिविषयम्।

पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे।

ईषदर्थे दरोऽव्ययम्।

विमर्दोत्थे परिमलो गन्धे जनमनोहरे।

स्तोमौघनिकरव्रात इति चतुर्ष्वमरः।

उद्देशकुञ्जवल्लिककूणस्य झणत्कारः शिञ्जितं तेन मुखरासु। अनेनापि स्तनितं ध्वनितम्। नवनखपदं रात्रिजातं नखक्षतं तत्र संसक्तः केशस्तन्निर्मोको निर्मोचनं तेन वेदना तथा क्षतः

---

१ म० -लुब्धमुग्ध- C D G H इति जम० च। २ निकुरम्ब- A B C F G H ३ -करकणाद्य० A B C D F G H -करकणासु लघ- E ४ -सुभगासु A B C D F H ५ म० -पददष्टकेश- A C D E F H इति जग० च मर० च। म० -पदांसदष्टकेश- B ६ -केशपाशनिर्मोक- A B D G इति मर० च।

षेदनाहतसीत्कारविनिर्गतदुग्धमुग्धदशनकिरणच्छटाधव-
लितभोगावासासु पुनर्दर्शनपृच्छाविधुरसखीजनानन्दणवीक्ष्य-
माणप्रियतमासु [1]क्षणदागतवैयात्यवचनशतस्मारकगृह[2]-
[3]शुकचाटुव्याहृतिक्षणजनितमन्दाक्षासु शरद्वासरलक्ष्मीष्विव

---

सीत्कारस्तस्माद्विनिर्गताभिर्दुग्धमुग्धदशनकिरणच्छटाभिर्धवलि-
तो धवलीकृतो भोगावासो वासगृहं याभिस्तासु। दशन-
किरणच्छटाभिस्तडिज्जनिता। मुग्धौ वर्बरसुन्दराविति विश्वः।
भोगावासो वासगृहमिति हारावली।

प्रियतमाः प्रेयांसः। क्षणं कामोत्सवं ददातीति क्षणदा
रात्रिस्तद्गतं वैयात्यवचनशतं धृष्टतावचनानि तत्स्मारकगृह-
शुकस्य चाटुव्याहृतिभिः क्षणं क्षणमात्रं जनितं मन्दाक्षं लज्जा
यासां तादृशीषु। तथाच माघः।

> अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः।
> पराक्रमः परिभवे वैयात्यं सुरतेष्विव॥

इति। चटु चाटु प्रिये वाक्ये। वैयात्यं धृष्टता मतेति हारावली।
कलाविशेषोत्सवयोः क्षणः। मन्दाक्षं ह्रीस्त्रपा व्रीडा। व्याहार
उक्तिर्लपितमिति चिरन्तनः।

शरच्छरदृतुः। न खेनाकाशेनालङ्कृताः पयोधरा मेघा
यासु। मण्डनं मण्डनानामितिवदाकाशभूषणानामाकाशस्येव

---

१ क्षणदायत- A क्षणदाहत- C २ -वचनशतसंस्मा.० A B C D E F G H
इति अग० च। ३ शुक चाट- E

नखालङ्कृतपयोधरास्वासन्नमरणास्विव जीवितेशपुराभिमुखीषु[1] [2]वसन्तवनराजिष्विवोत्कलिकावकुलासु[3] प्रियैरालिङ्ग्यमानासु कामिनीष्वान्दोलितकुसुमकेसरे[4] केशरेणुमुषि

---

भूषणत्ववर्णनम्। यद्वा न खेऽलङ्कृता भूषिताः सजला अतिनीला इति यावत्। तादृशाः पयोधरा मेघा यासु। शरत्काले निर्जलत्वादनलङ्कृतत्वमित्यर्थः। पक्षे। नखेन तत्क्षतं लक्ष्यते तेनालङ्कृताः पयोधराः स्तना यासां तादृशीषु। स्त्रीस्तनाब्दौ पयोधरावित्यमरः। जीवितेशो यमस्तस्य पुरं संयमिनी। पक्षे। जीवितेशः पतिः। तत्पुरं शरीरम्।

वल्लभे धर्मराजे च जीवितेशो धनागमे।
पुरं पुरि शरीरे च गुग्गुलौ कथितः पुरः।

इत्युभयत्र विश्वः।

वनराजिर्वनपरम्परा। उत्कलिकोद्गतकोरकः। कलिका कोरकः पुमानित्यमरः। पक्षे। उत्कलिकोत्कण्ठा। उत्कण्ठोत्कलिके समे इत्यमरः।

यमकेनाह। एतादृशे वाते वहतीत्यन्वयः। आन्दोलितकुसुमकेसरे कम्पितपुष्पकिञ्जल्के। रणितेन मधुरा मणयो यासां तादृशीनां रमणीनां केशरेणुमुषि केशपदेन तल्लग्नानि पुष्पाणि लक्ष्यन्ते तद्रजोहारके। विकचानि विकसितानि च

---

१ -पुरोऽभिमुखीषु C F  २ वसन्तारामरा- D  ३ -वत्सवनकुलासु A C
४ -केसर- G H

रणितमधुरमणीनां[1] रमणीनां [2]विकचकुमुदाकरे [3]मुदाकरे सङ्गभाजि प्रियविरहितासु रहितासु सुखेन मुर्मुरमिव वर्षति समन्तादर्पके दर्पकेषुदहनस्य [4]दूरप्रसारितकोक-

---

तानि कुमुदानि च कैरवाणि तेषामाकरे। एतादृशे सरसि। सङ्गभाजि। अतएव मुदाकरे हर्षकारके। मुदेत्यत्र भागुरिमते टाप्। एतेन विशेषणद्वयेन शीतमन्दसुगन्धित्वं ध्वनितम्।

प्रियविरहितासु। अतएव सुखेन रहितासु। समन्तात् परितो दर्पकेषुदहनस्य कामबाणाग्नेरर्पके समर्पके। अतएव मुर्मुरमिव तुषाग्निमिव वर्षति। मुर्मुरस्तु तुषानल इति वैजयन्ती। कोकप्रियतमा चक्रवाकी। केसरे केशरे इत्यत्र सभेदयमकम्। भोजराजेनोदाहृतं च।

शालं वहन्ती सुरतापनीयं सालं तडिद्भासुरतापनीयम्।
रच्चोभरच्चोभरसत्रिकूटा लङ्काकलङ्का कलिकाद्रिकूटे॥

इत्यत्र शालं सालमिति सभेदयमकमिति वर्णितम्। इदं स्थूलमव्यपेतयमकम्। केशर इति तालव्यमध्यपाठे लिङ्गमेव यमकप्रमाणम्।

अर्थे सत्यर्थभिन्नानां पदानां सा पुनः श्रुतिः।
यमकम्।
केसरो बकुले सिंहसटायां पुष्पमध्यगे।

---

१ -मधुकरमणीनां A F इति जग० च। -नूपुरमणीनां D इति नर० च।
२ विकासितकु- A B विकसितकु- G ३ सुकुमुद- D कुमुद- इति नर०।
४ दूरप्रचारित- B

प्रियतमारुते मारुते वहति जघनमदनपुरतोरणेन [१]मदन-नगरमहानिधिकनकप्राकारेण रोमावलीलतालवालेन जघन-चन्द्रमण्डलपरिवेषेण [२]त्रिभुवनविजयप्रशस्तिरोमावलीकनकपत्रेण [३]सकलहृदयवन्दिनिवासपरिखावलयेन जग-

---

इति विश्वः। किञ्जल्कः केसरोऽस्त्रियाम्। रेणुर्द्वयोः स्त्रियां धूलिः। मुत् प्रीतिः प्रमदो हर्षः। व्याकोशविकचस्फुटाः। फुल्लश्चैते विकसिते। सिते कुमुदकैरवे। कन्दर्पो दर्पकोऽनङ्गः। पत्री रोप इषुर्द्वयोः। कोकश्चक्रश्चक्रवाक इत्यष्टस्वमरः।

मेखलादाम्ना काञ्चीदाम्ना परिवृतजघनस्थलीमित्यन्वयः। जानपदेति ङीष्। तोरणेन बहिर्द्वारेण। प्राकारेण वरणेन। आलवालेनावालेन। थाला इति भाषायाम्। परिवेषेण परिधिना। प्रशस्तिः प्रशस्तिवर्णः। सैव रोमावली तस्याः कनकपत्रेण कनकखचितेन पत्रेण शाकपार्थिवादिः। यद्वा। ताम्रपत्रवत् कनकपत्रम्। सकलानां हृदयान्येव वन्द्यः प्रग्रहास्तेषां निवासः कारा तत्परिखावलयेन। खाई इति भाषायाम्। सर्वेषां हृदयानि तत्रैव निवसन्तीति भावः। जगल्लोचनानि सर्वजननेत्राणि तान्येव विहङ्गमाः पक्षिणस्तेषां माला पङ्क्तिस्तस्या लासकशला-कागुणः। कांपा इति भाषायाम्। सर्वेषां लोचनाकर्षकेणेति

---

१ मन्मथमन्दिरमहा- A B G मदनमन्दिरमहा- F इति नर० च। २ त्रि० -वर्णरो- A G त्रि० -रोमवर्णावली- B E F त्रि० -लेखलोमावली- D इति नर० च। ३ सकलजनहृ- A B C D E F G H

[1]काञ्चनविहङ्गममालालासकशलाकागुणेनेव[2] मेखलादाम्ना [3]परिवृतजघनस्थलीमुन्नतपयोधरभारान्तरितमुखचन्द्रदर्शना- [4]प्राप्तिजनितखेदेनेव [5]गुरुनितम्बबिम्बपयोधरकुम्भपीडाज-[6]नितायासेनेव गृहीतगुरुकलत्रानुशयेनेव [7]विधातुरतिपीड-

---

भावः। तोरणोऽस्त्री बहिर्द्वारम्। प्राकारो वरणः शालः। स्यादालवालमावालम्। परिवेषस्तु परिधिः।

प्रग्रहोपग्रहौ बन्द्यां कारा स्याद्बन्धनालये।

खेयं तु परिखा।

खगे विहङ्गविहगविहङ्गमविहायसः।

स्त्रीकट्यां मेखला काञ्चीत्यष्टस्वमरः। गमेः सुपि वाच्य इति खच्। विहायसो विह इति वाच्यं खच् च डिद्वा वाच्य इति विहायसो विहादेशे खित्यनव्ययस्येति मुमागमः। खनु अवदारणे। अन्येभ्योऽपि दृश्यन्त इति डः। परितः खाता परिखा।

उत्प्रेक्षयाह। मध्यभागेनावलग्नेनालङ्कृतामित्यन्वयः। उन्नतपयोधराभ्यामन्तरितो व्यवहितो यो मुखचन्द्रस्तद्दर्शनाप्राप्त्या जनितखेदेनेव। गुरुर्महान् नितम्बबिम्बो नितम्बमण्डलं पयोधरकुम्भः स्तनकलशस्ताभ्यां पीडया जनितायासेनेव। गृहीतो

---

१ का० -विहङ्गमलास- A C D F २ -कनकशला० C ३ परिगत- A B D F ५० -स्थलामु- A B C D E F G H इति जग० च मर० च। ४ प्राप्तिखे- A B C F H इति जग० च। ५ गुर्वनितम्बपयो- D H ६ -पयोधरकुम्भनिबद्धोभय-पार्श्वपीडा० B F G H -पयोधरभारपीडा० D ७ विधातुरपि पी- G

यतो [1]हस्तपाशजनितायासेनेव मम मूर्धजयोरियत्प्रमाणयोः स्तनकलशयोः कथं मध्येव निपातो भविष्यतीति चिन्तयेव[2] क्षीणतरतामुपगतेन मध्यभागेनालक्षितामनुरागरत्नमयकनकरुचकाभ्यां[3] चूचुकमुद्रासनाथाभ्यामतिगुरुपरिणाहतया पतनभयात् [4]कीलिताभ्यामिव चूचुकच्छलेन[5] गिरिसारेण मक-

---

बृहत्कलत्रस्य पृथुश्रोणिमण्डलस्यानुशयो दीर्घद्वेषो येन। विधातुर्ब्रह्मणः। मूर्धशब्देनोर्ध्वदेशो लक्ष्यते। तत्रोत्पन्नयोः स्तनकलशयोर्मध्येव पातो भविष्यतीति चिन्ता क्षीणताहेतुः। मध्यमं चावलग्नं च मध्योऽस्त्री। कलत्रं श्रोणिभार्ययोः। अनुशयो दीर्घद्वेषानुतापयोरिति विश्वमरः। बृहत्कलत्रपदेन युवतीपतेः पौगण्डे वयसि वर्तमानस्य वृत्तान्तोऽपि प्रतीयते। गुरुकलत्रानुशयेनेति पाठस्त्वयुक्तत्वादुपेक्षितः।

पयोधराभ्यामुद्भासमानामित्यन्वयः। अनुराग एव रत्नं तत्प्रचुरौ कनकरुचकौ गुलिकामणी रत्नमये गुलिके यतोऽतश्चूचुके एव मुद्रे जतुमये नामाक्षराङ्किते मुद्रे ताभ्यां सनाथाभ्यां सहिताभ्याम्।

रुचको मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः।

इति विश्वप्रकाशः। रुचको गुलिकामणिः। अतिगुरुपरिणाह-

---

१ हस्तपाशपरामर्श- D  २ विचिन्तयतेव C  ३ -कनककुरवकाभ्यां A D H -कनकसमुद्गकाभ्यां B -कनकफलरुचकाभ्यां C  ४ खचित- A B C D E इति अम॰ च नर॰ च। ५ + विधिना C

लावण्यनिषिक्तशेषलावण्यपुञ्जाभ्यामिव हृदयतडागकम[1]-लाभ्यामिव कन्दर्पकपोलचातुरिकाविभ्रमाभ्यां रोमावली-लताफलाभ्यां[2] [3]कन्दर्पदर्पवर्धनवशीकरणचूर्णपूर्णसमुद्गका[4]-भ्यामशेषजनहृदयपतनसञ्जातगौरवाभ्यां संसारमहातरु[5]-फलाभ्यां यौवनमत्तपादपप्रसवाभ्यां हारलताम्लानलोभ-

तया विमलतया पतनभयाल्लुतोस्तुकचुकेन निपेय गिरि-सारेण लोहकीलेन कीलिताभ्यामिव। सकलेष्ववयवेषु निषि-क्तस्यातएवावशिष्टस्य लावण्यस्य पुञ्जाभ्यामिव।

मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥

इति मेदिनी। हृदयतडागकमलाभ्यां कमलकोरकाभ्यामि-त्यर्थः। कन्दर्पः कामः। कपोलचातुरिका गलमसुरिका इति भाषायाम्। रोमावलीलता तत्फलाभ्याम्। कन्दर्पः काम-स्तस्य दर्पस्तद्वर्धनं तद्वशीकरणचूर्णं तेन पूर्णसमुद्गकाभ्यां सम्पु-टाभ्याम्। स्तनदर्शनादेव कामाविर्भावो नूनमिति भावः। अशेषाणां सर्वेषां जनानां हृदयस्य मनसः पतनं तेन सञ्जात-गौरवाभ्याम्। यथा कठिनद्रव्यान्तराभिघाताच्छरीरे ग्रन्थि-स्तथावलयेतद्दृष्टि युवमनसां पातात् पयोधरसम्भवः। एतेनैत-च्छरीरमार्दवं कुचयोः काठिन्यं च वर्णितम्। संसारमहातरु-

१ -तडागकनककम- A २ -महाफलाभ्यां D + इव H ३ क० -विवर्धन- D इति नर० च। ४ अमद्भो० A B C F G इति नर० च। ५ संसारपारि-जातक- A G H संसारपारिजातकमहा० B

नीयचक्रवाकाभ्यां [1]स्फुरत्तनुतारोमावलीसङ्गमव्याजप्रयाग[2]-
[3]तरुफलाभ्यां त्रिभुवनविजयपरिश्रमखिन्नस्य मकरकेतोर्विज-
नवासगृहाभ्यां[4] पयोधराभ्यामुद्भासमानां [5]मुखचन्द्रसन्नि-
[6]हितसन्ध्यारागेण[7] [8]दन्तमणिरक्षासिन्दूरमुद्रानुकारिणा

---

फलाभ्याम्। संसारस्येदमेवैकं फलमिति भावः। यौवनं ता-
रुण्यं तदेव पादपो वृक्षस्तत्प्रसवाभ्यां पुष्पाभ्याम्। तारुण्यं यौ-
वनं समे। विटपी पादपस्तरुरित्युभयत्रामरः।

पुष्पं प्रसूनं सुमनः प्रसवश्च मणीवकम्।

इति हैमः। त्रिभुवनविजयपरिश्रान्तस्येत्यनेन सौधनिवासो ध्व-
नितोऽतएव विजनवासगृहाभ्यां पटमण्डपाभ्यामित्यर्थः। तदा-
कारानुकारित्वादिति भावः। अमराहित्यवर्णनात् स्पन्दरहि-
तत्वं ध्वनितम्।

उत्प्रेक्षया प्रौढोक्त्या चाह। अधरपल्लवेनाधरोष्ठकिसलये-
नोपशोभमानामिति सम्बन्धः। पल्लवोऽस्त्री किसलयमित्यमरः।
मुखचन्द्रसन्निहितस्तत्समीपवर्ती सन्ध्यारागस्तात्कालिकलौहि-
त्यविशेषः। दन्तमणीनां रक्षा कान्तिविशेषसंरक्षणम्। तदर्थं
या सिन्दूरमुद्रा तदनुकारिणा। निःसरता हृदयानुरागेण
रञ्जितेनेव। कीर्तौ श्वैत्यवदनुरागे लौहित्यवर्णनं कविसम्प्रदायः।
तथाच माघः।

---

१ स्फु॰ -सङ्गमजव्या- C D २ -सङ्गमप्रयाग- E G H ३ — तरु- F ४ -जय-
वास॰ A B F ५ मुखचन्द्रनिहित- C ६ हितसन्ततस- A C F G हितसततस- D
७ + इव A B C E ८ द्विज- A B C D F G H इति जग॰ च नर॰ च।

निःसरता [1]हृदयानुरागेणेव [2]रञ्जितेन [3]रागसागरविद्रुम[4]नवपल्लवेनेवाधरपल्लवेनोपशोभमानां तरुणतरकेतकदलद्राघीयसा पक्ष्मलचटुलालसेन हृदयवासगृहावस्थितहृच्छय[5]विलासिनो गवाक्षशङ्कामुपजनयता सरागेणापि निर्वाणं

---

छादितः कथमपि त्रपयाक्ष्णयः प्रियं प्रति चिराय रमण्या।
वारुणीमदविशङ्कमथाविरभूच्चुषोऽभवदसाविव रागः॥

इति। रागसागरोऽनुरागसमुद्रस्तत्सम्बन्धिविद्रुमस्य प्रवालस्य तरोर्नवपल्लवेनेव। अत्र प्रौढोक्तिरपि।

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम्।

विद्रुमः पुंसि प्रवालः पुंनपुंसकमित्यमरः।

नयनयुगलेन भूषितामित्यन्वयः। तरुणतरकेतकदलद्राघीयसा तद्वद्दीर्घेण। ईयसुनि प्रियस्थिरेत्यादिना दीर्घशब्दस्य द्राघ्यादेशः। दलं पर्णं छदः पुमानित्यमरः। पक्ष्मलं पक्ष्मयुक्तं चटुलं चञ्चलमलसं मन्दं तादृशेन। हृदयमेव वासगृहं तत्रावस्थितस्य हृच्छयविलासिनः। कामविलासिनो गवाक्षशङ्कां वातायनशङ्कामुपजनयता। वातायनं गवाक्ष इत्यमरः। सरागेण सानुरागेण निर्वाणं मोक्षं कुर्वतेति विरोधः। मुक्तिः कैवल्यनिर्वाणमित्यमरः। परिहारस्तु निर्वाणं निवृत्तिः। एतद्दर्शनाज्जनानां पदार्थान्तरेभ्यस्ततो निवृत्तिरिति भावः। नि-

---

१ — हृदय- E २ सानुर- A B G ३ रागसागरप्रवालनव- G रागसागरविद्रुमेणेवाधरपल- H ४ सकलेने- A B C D E F H इति नर० च। ५ -हृदयमय- F

नीयचक्रवाकाभ्यां [1]चारुतनुतारोमावलीसङ्गमव्याजप्रयाग[2]-[3]तरुफलाभ्यां त्रिभुवनविजयपरिश्रमखिन्नस्य मकरकेतोर्विजनवासगृहाभ्यां[4] पयोधराभ्यामुद्भासमानां [5]मुखचन्द्रसन्निहितसन्ध्यारागेण[6] [7]दन्तमणिरक्षासिन्दूरमुद्रानुकारिणा

---

फलाभ्याम्। संसारस्येदमेवैकं फलमिति भावः। यौवनं तारुण्यं तदेव पादपो वृक्षस्तत्प्रसवाभ्यां पुष्पाभ्याम्। तारुण्यं यौवनं समे। विटपी पादपस्तरुरित्युभयत्रामरः।

पुष्पं प्रसूनं सुमनः प्रसवश्च मणीवकम्।

इति हैमः। त्रिभुवनविजयपरिश्रान्तस्येत्यनेन वीर्यनिवासो ध्वनितोऽतएव विजनवासगृहाभ्यां पटमण्डपाभ्यामित्यर्थः। तदाकारानुकारित्वादिति भावः। जनराहित्यवर्णनात् स्वन्दरहितत्वं ध्वनितम्।

उत्प्रेक्षया प्रौढोक्त्या चाह। अधरपल्लवेनाधरोष्ठकिसलयेनोपशोभमानामिति सम्बन्धः। पल्लवोऽस्त्री किसलयमित्यमरः। मुखचन्द्रसन्निहितस्तत्समीपवर्ती सन्ध्यारागस्तात्कालिकलौहित्यविशेषः। दन्तमणीनां रक्षा कान्तिविशेषसंरक्षणम्। तदर्थं या सिन्दूरमुद्रा तदनुकारिणा। निःसरता हृदयानुरागेण रञ्जितेनेव। कीर्तौ श्वैत्यवदनुरागे लौहित्यवर्णनं कविसम्प्रदायः। तथाच माघः।

---

१ चा° -सङ्क्रमणव्या- C D २ -सङ्गमप्रयाग- E G H ३ — तरु- F ४ -जय-वास° A B F ५ मुखचन्द्रनिहित- C ६ हितसन्ततस- A C F G हितसततस- D ७ + इव A B C E ८ द्विज- A B C D F G H इति जग° च नर° च।

निःसरता [1]हृदयानुरागेणेव [2]रञ्जितेन [3]रागसागरविद्रुम-[4]नवपल्लवेनेवाधरपल्लवेनोपशोभमानां तरुणतरकेतकदलद्रा-घीयसा पक्ष्मलचटुलालसेन हृदयवासगृहावस्थितकन्दर्प[5]-विलासिनो गवाक्षशङ्कामुपजनयता सरागेणापि निर्वाणं

---

छादितः कथमपि त्रपयाऽन्तर्यः प्रियं प्रति चिराय रमण्या।
वारुणीमदविशङ्कमथाविश्चकार सोऽभवदसाविव रागः॥

इति। रागसागरोऽनुरागसमुद्रस्तत्सम्बन्धिविद्रुमस्य प्रवालल-तोर्नवपल्लवेनेव। अत्र प्रौढोक्तिरपि।

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम्।

विद्रुमः पुंसि प्रवालः पुंनपुंसकमित्यमरः।

नयनयुगलेन भूषितामित्यन्वयः। तरुणतरकेतकदलद्रा-घीयसा तद्वद्दीर्घेण। ईयसुनि प्रियस्थिरेत्यादिना दीर्घशब्दस्य द्राघ्यादेशः। दलं पर्णं छदः पुमानित्यमरः। पक्ष्मलं पक्ष्म-युक्तं चटुलं चञ्चलमलसं मन्दं तादृशेन। हृदयमेव वासगृहं तत्रावस्थितस्य कन्दर्पविलासिनः। कामविलासिनो गवाक्षशङ्कां वातायनशङ्कामुपजनयता। वातायनं गवाक्ष इत्यमरः। सरा-गेण सानुरागेण निर्वाणं मोक्षं कुर्वतेति विरोधः। मुक्तिः कैव-ल्यनिर्वाणमित्यमरः। परिहारस्तु निर्वाणं निवृत्तिः। एतद्द-र्शनाज्जनानां पदार्थान्तरेभ्यस्ततो निवृत्तिरिति भावः। नि-

---

१—हृदय- E २ चनुर- A B G ३ रागसागरप्रवालसमय- G रागसागर-विद्रुमेणेवाधरपल्ल- H ४ नवकलेन- A B C D E F H इति नर० च। ५ -हृद-यसव- F

कुर्वता[1] [2]गतिप्रसररोधकश्रवणकृतकोपेनेवोपान्तलोहितेन[3] धवलयतेव जगदशेषमुत्फुल्लकमलकाननसनाथमिव गगनं कुर्वता दुग्धाम्भोधिसहस्राणीवोद्वमता[4] कुन्दनीलोत्पलमाला-लक्ष्मीमिवोपहसता नयनयुगलेन [5]भूषितां दशनरत्नतुलाद-

---

दीर्घोऽवाक इति निपातः। गतिप्रसररोधकश्रवणकृतकोपेनेव। अन्तश्च समीपमुपान्तं प्रान्तदेशस्तत्र लोहितेन रक्तेन। उपान्तमिति विभक्तीत्यादिना सामीप्येऽव्ययीभावः। रोहितो लोहितो रक्त इत्यमरः।

दृष्टिसञ्चारजन्यं विशेषं वर्णयन्नाह। धवलयता धवलं कुर्वता जगदशेषम्। उत्फुल्लानि व्याकोशानि कमलानि तेषां काननं तेन सनाथं गगनमन्तरिक्षं कुर्वता।

प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः।

नभोऽन्तरिक्षं गगनमित्युभयत्रामरः।

दुग्धाम्भोधिसहस्रमिवोद्वमतोद्गिरता। टुवम उद्गिरणे। कुन्दनीलोत्पलमालालक्ष्मीमिवोपहसता। तदधिकशोभत्वादिति भावः।

नानावर्णेन परिष्कृतां भूषितामित्यन्वयः। भूषितश्च परिष्कृत इत्यमरः। दशनरत्नानि दन्तरत्नानि तेषां तुलादण्डेन।

---

१ जनयता A B C D F G H इति नर॰ च। २ गतिप्रसरावरो॰ C D E F H ३ -लोपान्तलो॰ D ४ -सहोत्फुल्लयौवो- H ५ विभूषितां A B D F इति नर॰ च।

रत्नेन [1]नयनसमुद्रसेतुबन्धेन[2] [3]यौवनमन्मथमत्तवारणयोर्वरण्डकेनेव नासावंशेन परिष्कृतां [4]विलोचनेन्दीवरभ्रमरपङ्क्तिभ्यां मुखमदनमन्दिरतोरणाभ्यां रागसागरवेलाभ्यां[5] यौवननर्तकलासिकाभ्यां भ्रूलताभ्यां विराजमानां[6] घनसम-

---

नयनसमुद्रस्य सेतुबन्धेन। सेतुरालौ स्त्रियां पुमानित्यमरः। यौवनमन्मथावेव मत्तवारणौ मत्तगजौ तयोर्वरण्डकेन।

भित्तेरुभयपार्श्वे द्वौ स्थापयित्वा मतङ्गजौ।
शोधयन्तीति प्रसिद्धं भित्तिः सा तु वरण्डकम्॥

अगड इति भाषायां प्रसिद्धम्। कुञ्जरो वारणः करीत्यमरः।

रूपकातिशयोक्तयश्च। भ्रूलताभ्यां विराजमानां शोभमानामित्यन्वयः। विलोचनेन्दीवरस्य नेत्रनीलोत्पलस्य भ्रमरपङ्क्तिभ्याम्। इन्दीवरं च नीलेऽस्मिन्निति कुमुदप्रकरणेऽमरः। मुखमदनमन्दिरस्य तोरणाभ्यां बहिर्द्वाराभ्याम्। तोरणोऽस्त्री बहिर्द्वारमित्यमरः। रागसागरोऽनुरागसमुद्रस्तद्वेलाभ्याम्।

अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि।

इत्यमरः। यौवननर्तकलासिकाभ्याम्। नर्तकीलासिके समे इत्यमरः।

श्लेषेणाह। घनसमयो वर्षाकालस्तस्य लक्ष्मीः शोभा तामि-

---

१ नयनयुगलस- B २ -बन्धेनेव D E H ३ यौवनमन्मथमत्तावा- H ४ विलोचनकुवलयभ्र- A B C D E F G H ५ -वेषिकाभ्यां A B C D F H इति अम० च मर० च। ६ इति अम० च। विराजितां A B C D E F G इति मर० च।

वर्षाकाललक्ष्मीमिवोन्नतचारुपयोधरां [१]जयशब्दघोषणाप-न्नार्जुनमूर्तिमिवोन्नतचारुतुलाकोटिप्रतिष्ठितां सुयोधनधृतिमिव[२] कर्णविश्रान्तलोचनां वामनलीलामिव दर्शितबलिविभङ्गां[३] [४]वृश्चिकराशिरविस्थितिमिवातिक्रान्तकन्यातुलामुषामिवानिरु-

---

वोन्नतचारुपयोधराम्। स्त्रीस्तनाब्दौ पयोधराविव्यमरः। जय-शब्दस्य घोषणामापन्ना प्राप्ता या अर्जुनमूर्तिस्तामिवोन्नतचारुतुला-कोटौ प्रस्फुरमाणतुलाग्रे प्रतिष्ठितां स्थिताम्। परीक्षासमये शुद्धीभवन् सर्वैर्जयजयेत्युच्यते। उच्चैर्घुष्टं तु घोषणेत्यमरः। पक्षे। उन्नतचारुतुलाकोटिना शोभमानपादाङ्गदेन प्रतिष्ठितां प्राप्तप्रतिष्ठाम्। तदस्य सञ्जातमिति तारकादित्वादितच्। पा-दाङ्गदं तुलाकोटिरित्यमरः।

सुयोधनो दुर्योधनस्तस्य धृतिर्धैर्यमिव कर्णविश्रान्तलोचना-ताम्। यावत् कर्णं पश्यति तावत् तस्य धृतिरिति भावः। पक्षे। कर्णयोः श्रोत्रयोर्विश्रान्ते लोचने यस्यास्ताम्। कर्णशब्दयहौ श्रोत्रमित्यमरः।

वामनलीलामिव वामनावतारविष्णुलीलामिव दर्शितो बलेस्तन्नाम्नो दैत्यस्य विभङ्गो यस्यां ताम्। पक्षे। दर्शितो वलीनां त्रिवलीनां विभङ्गो यस्यां ताम्। वलिः प्राण्यङ्गजे स्त्रिया-मित्यमरः।

---

१ जयघोष- C D F २ -नीतिमिव C -मूर्तिमिव D -चित्तवृत्तिमिव G H
३ -वलिभङ्गां C ४ वृश्चिकरवि- A B D F

द्दर्शनसुखां शचीमिव नन्दनेक्षणरुचिं पशुपतिताण्डवली-
लामिवोल्लसच्चक्षुःश्रवसमटवीमिवोत्तुङ्गश्यामलकुचां वानर-

---

वृश्चिकराशौ रविस्थितिमिवातिक्रान्ते कन्यातुले नवामक-
राशौ यथा ताम्। तयोस्तत्पूर्वत्वादित्यर्थः। पक्षे। अतिक्रान्ता
कन्यानां तुला तुलना यया ताम्। उषा बाणासुरस्य कन्या
तामिवानिरुद्धस्य दर्शनेन सुखं यस्याः। पक्षे। अनिरुद्धमनिवारितं
दर्शनसुखं यस्यास्ताम्।

शचीमिवेन्द्राणीमिव नन्दनस्येन्द्रवनस्येक्षणे रुचिर्यस्यास्ताम्।
पुलोमजा शचीन्द्राणी। नन्दनं वनमितीन्द्रप्रकरणे इत्योर-
मरः। पक्षे। नन्दयतीति नन्दना। नन्द्यादित्वात् कर्तरि ल्युः।
अजादित्वाट्टाप्। तादृशी चक्षुरुचिर्नेत्रकान्तिर्यस्यास्ताम्। ईक्षणं
चक्षुरक्षिणी इत्यमरः।

पशुपतेः शिवस्य ताण्डवलीलामिवोल्लसच्चक्षुःश्रवसमुल्लसत्स-
र्पाम्। ईशः पशुपतिः शिवः। ताण्डवं नटनं नाट्यम्। चक्षुः-
श्रवाः काकोदरः फणीति चेत्यमरः। पक्षे। उल्लसच्चक्षुःश्रवसं
शोभमाननेत्रकर्णाम्। अटवीमिवारण्यमिवोत्तुङ्ग उच्चः श्यामो
लकुचो यस्यां ताम्। लकुचो लिकुचो डहुरित्यमरः। बडहर
इति भाषायाम्। अटव्यरण्यं विपिनमिति च। पक्षे। उत्तुङ्गौ
श्यामलौ कुचौ स्तनौ यस्यास्ताम्। दग्धः पट इतिवदवयवध-
र्मस्य समुदाये समारोपात् कुचयोः श्यामलतावर्णनम्। काल-
श्यामलमेचका इत्यमरः।

सेनामिव सुग्रीवाङ्गदोपशोभिता [1]भास्वतालङ्कारेण [2]चन्द्रेण [3]वदनमण्डलेन [4]लोहितेनाधरपल्लवेन[5] सौम्येन दर्शनेन गुरुणा नितम्बबिम्बेन[6] विकचेन[7] नेत्रकमलेन[8] शनैश्चरेण पादेन [9]तमसा केशपाशेन ग्रहमयीमिव संसारभित्तिचित्र-

---

वानरसेनामिव सुग्रीवेणाङ्गदेनोपशोभिताम्। पक्षे। शोभना ग्रीवा यस्याः सा चासावङ्गदेन केयूरेणोपशोभिता ताम्। केयूरमङ्गदं तुल्ये इत्यमरः।

रत्नावलीश्लेषाभ्यामाह। ग्रहमयीमिवेत्यन्वयः। भास्वता शोभमानेनालङ्कारेण भूषणेन। पक्षे। भास्वान् सूर्यः। भास्वद्विवस्वत्सप्ताश्वेत्यमरः। चन्द्रेणाह्लादकेन। चदि आह्लादे। स्फायितञ्चीति रक्। वदनमण्डलेन। पक्षे। चन्द्रेण चन्द्रमसा। हिमांशुश्चन्द्रमाश्चन्द्र इत्यमरः। लोहितेन रक्तेनाधरपल्लवेन। रोहितो लोहितो रक्त इत्यमरः। पक्षे लोहितेन भौमेन। कुजो भौमो लोहिताङ्गो महीसुत इत्यमरः। सौम्येन मनोहरेण दर्शनेन विलोकनेन। पक्षे। सौम्येन बुधेन। रौहिणेयो

---

१ भास्वतेत्यादिकेशपाशेनेत्यन्तस्य स्थाने सर्वेषु मूलपुस्तकेषु जगद्धरनरसिंहटीकयोश्चान्यक्रमावलम्बी पाठोऽस्ति। तथाहि। शनै॰ पा॰ सौ॰ दर्श॰ गु॰ नि॰ लो॰ वि॰ ने॰ भा॰ च॰ वद॰ त॰ के॰। इत्येतद्वर्गे च पाठान्तराणि विद्यन्ते। २ मुखेन चन्द्रमण्डलेन काव्येनालापेन H ३ मुखेन A B C D F G ४ लोहितेनाधरेण A B C D E F G H ५ + श्वेतरोचिषा स्मितेन C D इति नर॰ च। ६ नितम्बेन A B C D E F G H ७ विलोचनोत्पलेन A B C E F G H नवनोत्पलेन D ८ + काव्यानुगतेन C + सितेन हारेण C D इति नर॰ च। ९ —तमसा केशपाशेन B C E F G

लेखामिव त्रैलोक्यसौन्दर्यसङ्केतभूमिमिव रसायनसिद्धिमिव यौवनमहायोगिनः सङ्कल्पभित्तिमिव[1] शृङ्गारस्य निधानमिव

---

बुधः सौम्य इत्यमरः । गुरुणा महता नितम्बबिम्बेन । पक्षे । गुरुणा बृहस्पतिना । गीष्पतिर्धिषणो गुरुरित्यमरः । विकचेन विकसितेन विलोचनोत्पलेन नेत्रकमलेन । पक्षे । विगतः कचो बृहस्पतिपुत्रो यस्माद्विकचः शुक्रः ।

शुक्रे केतौ च विकच उत्फुल्ले च निगद्यते ।

इति विश्वः । शनैर्मन्दं चरति गच्छति तादृशेन पादेन । तस्या गजगामिनत्वेति भावः । पक्षे । शनैश्चरः सौरिः । शनौ सौरिशनैश्चरावित्यमरः । तम इव तमस्तादृशेन केशपाशेन मार्दवदैर्घ्यश्यामतादिगुणेन । चन्द्रपदार्थे चतुर्गतिप्रतिरोधकत्वादिति भावः । कचः केशः शिरोरुहः ।

पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे ।

इत्यमरः । पक्षे तमसा राहुणा । तमस्तु राहुः स्वर्भानुरित्यमरः । सर्वत्रोपलक्षणे तृतीया । राहुकेत्वोरेकत्वात् शुक्रे केतौ च विकच इति विश्वकोशाद्विकचशब्देन वा केतोरपि संग्रहः ।

क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः ।

संसारभित्तिचित्रलेखामिव । चित्रलेखेवेयं शोभितेति भावः । यौवनस्य रसायनसिद्धिमिव । जराव्याधिजित् सद्यस्समत्वातिकृत् स्वर्णरौप्यजनको वौषधिविशेषो रसायनम् । शृङ्गारस्य सङ्कल्पभित्तिमिव । सङ्कल्पः कर्म मानसमित्यमरः । कौतुकस्य कौतु-

---

१ -हर्तिमिव A B C F H

कौतुकस्य [1]त्रिभुवनविजयपताकामिव मकरध्वजस्याविर्भूति-मिव मनसोऽभिभूतिमिव[2] मदनस्य [3]स्तम्भनचूर्णमिवेन्द्रियाणां मोहनशक्तिमिव मन्मथस्य विहारस्थलीमिव[4] सौन्दर्यस्यैकायतनशालामिव[5] सौभाग्यस्योत्पत्तिस्थानमिव [6]लावण्यस्याक-

---

दलस्य निधीयन्तेऽस्मिन् निधानमाश्रयः। कौतूहलं कौतुकं चेत्यमरः। मकरध्वजस्य कामस्य त्रिभुवनविजयपताकामिव। हनुमत्पताकादिवदिति भावः। पुष्पधन्वा रतिपतिर्मकरध्वज इत्यमरः। मनस आविर्भूतिमित्र। मदनस्याभिभूतिमिव। अभिभवकारणमिवेत्यर्थः। इन्द्रियाणां धीन्द्रियकर्मेन्द्रियाणां स्तम्भनचूर्णमिव। एतद्दर्शनादेव स्तम्भरूपसात्त्विकभावाविर्भाव इति भावः। मन्मथस्य मोहनशक्तिमिव। मदनो यया जगन्मोहयति सैवेयं मूर्तिमतीति भावः।

सौन्दर्यस्य विहारस्थलीमिव। विहारः क्रीडा तदर्थं स्थली पुरुषेणासंस्कृता भूमिस्तामिव। एतेनेयमलङ्कारादिपुरुषसंस्कारहीनापि रम्यैवेति स्वाभाविकसौन्दर्यातिशयो ध्वनितः। तथाच कालिदासः।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।

---

१ विजयप- C D H २ -स्यातिरतिभूमिमिव B -स्याभिर्भूतिमिव C -स्याभिभूतिमिव D -स्यातिभूमिमिव F -स्याविर्भूतिमिव मनसोऽसभूतिमिव G ३ स्तम्भकमिवेन्द्रियाणां इति जग०। ४ विहारस्थलीमिव H ५ -ायतनमिव A B D H ६ कान्तेराकर्ष- D

र्षणसिद्धिमिव[1] मनसश्चक्षुर्बन्धमिव[2] मन्मथेन्द्रजालिनस्त्रिभुव-नविलोभनसृष्टिमिव प्रजापतेः [3]कन्यकामसदृशहर्षदर्शनीयशोभा-मपश्यत् स्वप्ने ।

अथ मां प्रीतिविस्फारितेन चक्षुषा पिबन्निव जनितेर्ष्ययेव निद्रया चिरसेवितया मुमुचे । [4]विबुद्धस्तु विषमशरेण[5] दुर्-

---

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

इति । सौभाग्यस्य सुभगताया एका प्रधानायतनभूता चैत्य-माला तामिव ।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।

चैत्यमायतनं तुल्ये इत्यमरः । लावण्यस्योत्पत्तिस्थानमिव ।

मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥

इति मेदिनी । मनस आकर्षणसिद्धिमिव । सुवर्णाकर्षणभैरवा-दिसिद्धिमिवेत्यर्थः । मन्मथेन्द्रजालिन इन्द्रजालविद्यानिपुणस्य चक्षुर्बन्धमिव । प्रजापतेर्ब्रह्मणस्त्रिभुवनविलोभनसृष्टिमिव ।

अथ स्वप्नदर्शनोत्तरं प्रीतिविस्फारितेन विकसितेन चक्षुषा मां पिबन्निव । अतएव चिरसेवितया निद्रया जनितेर्ष्ययेव ।

---

१ ·र्षणमन्त्रसिद्धिमिव A D F G H २ ·मोहौषधीमिव A B F ·अद्भुतौषधीमिव C D G H ३ कन्यकां वामचक्षुषाम- H ४ प्रबु- D ५ विषमस्मरशरेण A C D F इति मर॰ च ।

नवचसीव निमग्नमात्मानं धारयितुं न शशाक। तथापि सक-माकाशतलमालिङ्गन् प्रसारितबाहुयुगल एह्येहि प्रियतमे[1] क्व गच्छसीति[2] दिक्षु[3] लिखितामिवोत्कीर्णामिव[4] चक्षुषि नि-खातामिव हृदये प्रियतमामाजुहाव। ततस्तत्रैव शय्यातले [5]निमीलितनयनो निषिद्धाशेषपरिजनो[6] हस्तकपाटः परि-

---

मपि विद्यमानायां मत्सम्बन्धात् प्राप्तायामत्यासक्तिरस्येति सेर्ष्य-त्वम्। सती माने स्थाने मरणमथवा दूरगमनमिति। मुमुचे मुक्तः। स इति शेषः। विधुरस्तु आगरितस्य विषमरसीव दुर्ज-नवचसीव निमग्नमात्मानं धारयितुं सावधानतया व्यवहारे प्रवर्तयितुं न शशाक।

चक्षुःप्रीतिरित्यादिदशावस्थासून्मादावस्थां वर्णयति। एवं तावत्कालमाकाशतलमालिङ्गन्। आकाशतलालिङ्गनेन मोह-वशात् परितो दृश्यमानायाः प्रियतमाया आलिङ्गनं सूच्यते। अतएवाग्रे क्व गच्छसि प्रियतम इत्याद्युक्तम्। प्रसारितबाहुः। एह्येहीति सम्भ्रमे द्विरुक्तम्। प्रियतमे क्व गच्छसीति दिक्षु लि-खितामिव। चक्षुष्युत्कीर्णामिव विखिन्नामिव। कॄ विक्षेपे। हृदये निखातामिव प्रियतमामाजुहाव।

ततस्तत्रैव शय्यातले निमीलितनयनो निषिद्धाशेषपरिजनो

---

१ + मामनुगच्छ A B F G २ मा गच्छ मा गच्छेति D ३ + विदिक्षु A B D E F G H + दिक्षु C ४ + -र्पितामिव नभसि प्रिय- D ५ निमीलो A B C E ६ -शेषजनदर्शनो D

स्ततताम्बूलाहारादिसकलोपभोगश्चाहिनमनयत्। तथैव निशा-मपि [1]स्वप्नसमागमेच्छाभिरनैषीत्।

अथ तस्य प्रियसखो मकरन्दो नाम[2] कथमपि लब्धप्रवेशः कन्दर्पसायकप्रहारपरवशं कन्दर्पकेतुमुवाच। सखे [3]किमि-

---

निवारितसकलसेवकवर्गो दत्तकपाटः। परिहृतताम्बूलादि-सकलोपभोगः। व्ययत्वादिति भावः। तथाच भारविः।

आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन।
सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम्॥

इति। तद्दिवसमनयत्। कपाटमररं तुल्ये इत्यमरः। तथैव पूर्वोक्तप्रकारेणैव तस्याः स्वप्ने समागमस्तस्येच्छाभिर्निशामप्य-नयत्।

अथ तादृगवस्थोत्तरं तस्य कन्दर्पकेतोः प्रियसखो मकरन्दो नाम कथमपि कपाटविघटनादिप्रयासेन लब्धप्रवेशः। कन्द-र्पसायकपरवशान्तःकरणं कन्दर्पकेतुमुवाच। प्रियसख इत्यत्र राजाहःसखिभ्यष्टजिति समासान्तष्टच्।

सखे किमिदमसाम्प्रतमनुचितमसाधुजनोचितमध्यानं व्यव-हारमाश्रितोऽसि। सन्तस्तव प्रज्ञावत्योरतिभूमेरेतच्चरितमा-लोक्य वितर्कदोलासु संशयदोलासु निपतन्ति। संशयिता भवन्तीति भावः।

---

१ कमदर्शनसमा- A B F G २ मकरन्दः कथं A B G ३ कि॰ -जनोचितः ज्ञानि- A B कि॰ -जनोचितं चरितमालि- C D E F G H

इत्येवमनवसाधुजनोचितमनवधानमाश्रितोऽपि ¹नवैनमपरि-मालोक्य वितर्कदोलासु ²निमज्जन्ति सन्तः खलाः ³पुनस्तद्-निर्वाच्यमनिष्टमेवावधारयन्त्यनिष्टोद्भावनरसोत्तरं हि खलहृ-दयं⁴ को नामास्य नक्तमिद्धपत्ते समर्थः ।

तथाहि भीमोऽपि न बकद्वेष्याश्रयाशोऽपि⁵ मातरिश्वातिकटु-

---

काव्यलिङ्गेनाह । खलाः पुनस्तद्निर्वाच्यमनिष्टमेवावधा-रयन्ति निश्चिन्वन्ति । अनिष्टोद्भावनेऽनभिमतप्रकाशने यो र-सोऽनुरागस्तदुत्तरं प्रधानं यस्य तादृशम् । अस्य खलस्य ।

भीमोऽपि युधिष्ठिरानुजोऽपि बकद्वेषी बकद्वेष्टा नेति वि-रोधः । भीमो भयानकोऽपि नवकान् स्तुत्यान् द्वेष्टि तादृक् । अपिस्वार्थे । इत्यविरोधः । णू स्तवने । आश्रयाशो वह्निरपि मातरिश्वा वायुरिति विरोधः ।

श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ।

इत्यमरः । आश्रयमश्नाति तादृशः । यमाश्रयति तमेव भक्षक इत्यर्थः ।

आश्रयाशो हुतवहे भवेदाश्रयनाशके ।

इति विश्वप्रकाशः । मातरि जनन्यां तत्सदृशे पोषके । श्वा कुक्कुरः । अनुचिताचरणत्वात् तत्सदृश इति भावः । इत्यविरोधः ।

---

१ तव चेतच- E G २ विशन्ति A E ३ पुनस्तावद्- A B ४ + भवति C D E H ५ + न पावको मातरिश्वा न पवमानोऽतिकटुरपि A B + न पावकोऽपवमानोऽपि मातरि- H

रपि मन्दारसः सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि न [1]कटुत्वं [2]जहाति तालफलरस इवापातमधुरः परिणामविरसस्तिक्तश्च पादपराग इवावधूतो[3] मूर्धानं कषाययति विषतरुप्रसव इव यथा यथानुभूयते तथा तथा मोह-

---

अतिकटुर्मन्दारसः। अतिकटोर्मन्दारस्याल्पं विरोधः। अतिकटुरतिकटुप्रकृतिर्मन्दोऽप्रासावरसश्चेति मन्दारसः। सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि पादप्रणामादिना। पक्षे। अधिकरणस्य करणत्वेन वर्णनम्। शिरसि धृतोऽपि कटुत्वं न जहाति। काटवमिति पाठस्तस्यार्थस्तारकत्वादुपेक्ष्यः।

तालफलरस इवापातमधुरो भोजनप्रारम्भ एव मधुरः परिणामविरसस्तिक्तश्च। पक्षे। पातो दोषस्तमभिव्याप्यापातं मधुरः। हिताभाषाचरणेन मधुरः। परिणामे दोषज्ञानोत्तरं विरस उदासीनः। तिक्तः प्रतिजनं मर्मप्रकाशकः। पादपराग इव चरणरेणुरिवावधूतः चिप्तस्तिरस्कृतश्च। मूर्धानं शिरः कषाययति धूसरयति पीडयति च।

परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि।
पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्। मूर्धा ना मस्तकोऽस्त्रियामिति विश्वमेरः।

विषतरुप्रसव इव यथा यथानुभूयते सेव्यते तथा तथा मोहमेव मूर्च्छां वैचित्त्यं वा दृढयति स्थिरीकरोति। नीचदेशस्येव

---

1 काटवं B C D E F G H  2 विजहाति G  3 + ऽपि C D E F H

सेव दृश्यन्ते न वारिविरहोऽस्य[1] जायते नीचदेशस्येव निदा-घदिवस इव मत्कुणमत्सरो भवति तापं[2] कुसुमसामन्धकार[3] इव दोषानुबन्धचतुरो[4] [5]विश्वकर्मावलोपनोद्यतश्च विरूपाक्षो-

---

निम्नभूभागस्येव वारिविरहो जलविरहो न जायते। पक्षे। अव्ययानामनेकार्थत्वाद्वारम्भ एवार्थे। न वा नैवास्य ध्वलकारिविरहः शत्रुविरहो जायते। सर्वदा भोगसत्त्वादिति भावः।

रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः।

इत्यमरः। निदाघदिवस इव ग्रीष्मर्तुदिवस इव मत्कुणमत्सरो मत्कुणचिन्तकः। कुसुमानां कुम्भानां तापं वहति।

मत्कुणा मत्सरा ज्ञेया भ्रमराली च या मता।

इत्युत्तरतन्त्रम्।

मत्सरः कृपणे कार्ये मत्सिकायां च मत्सरः।

इति धरणिः। स्त्रियः सुमनसः पुष्पम्।

निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः।

इति द्वयोरमरः। पक्षे। मत्कुणमत्सरो मत्कुणमात्सर्यवान् क्रोधी वा। सुमनसां शुद्धान्तःकरणानाम्। मत्सरोऽन्यशुभद्वेष इत्यमरः। क्वचित् क्रोधेऽपि मत्सर इति रत्नकोषः।

अन्धकार इव दोषा रात्रिस्तस्या अनुबन्धे चतुरः। विश्वकर्मादिस्थपत्यावलोपनमङ्गलं तत्रोद्यतः।

---

१ -ऽप्यस्य E H २ सन्तापं A B C D F G ३ -अन्धकारभार F ४ -सन्धोचतुरो D ५ विश्वकर्मविलो- B H इति क्रम० च। विश्वकर्मावलोपोद्यतश्च D

पि चक्रधरः शक्राश्व इवोच्चैःश्रवा नदेशजप्रशंसी च शरस्येव
[1]विभिन्नस्यापि सतः स्नेहं दर्शयतोऽपि तक्राट इव हृदयं

---

विश्वकर्मा देवशिल्पी विश्वकर्मा दिवाकरः ।

इत्युत्तरतन्त्रम् । पक्षे । दोषस्यानुबन्ध आरोपे चतुरः । विश्वेषां कर्म क्रिया तस्या अवलोपनं छेदनं तत्रोद्यतः । विरूपाक्षः शिवश्चक्रधरो विष्णुरिति विरोधः । विरूपाक्षो विषमव्यवहारः । चक्रधरो दम्भभेदधरः ।

अक्षो ज्ञानार्थशकटव्यवहारे च पाशके ।

इति मेदिनीकारः ।

जलावर्ते समूहे च दम्भभेदरथाङ्गयोः ।
शस्त्रभेदे च सेनायां चक्रं चापि विहङ्गके ॥

इति रन्तिदेवः । इति परिहारः ।

शक्राश्व इवेन्द्राश्व इवोच्चैःश्रवा उच्चैःश्रवःसञ्ज्ञकः । हय उच्चैःश्रवा इतीन्द्रप्रकरणेऽमरः । नदेशात् समुद्राज्जातस्तादृशस्यापि प्रशंसावांस्तथाभूतः । पक्षे । उच्चैःश्रवा बधिरः । परकीयकार्यश्रवणे देशजान् प्रशंसितुं शीलमस्य तादृशो न भवति तथाविधः । शरस्येव दध्यग्रभागस्येव विभिन्नस्यापि सक्तस्यापि सतः साधोर्विद्यमानस्य च स्नेहमनुरागं चैक्कणं दर्शयतोऽपि तक्राट इव मन्थान इव हृदयं विलोडयति । शरो दध्यग्रभागः स्यादिति रत्नकोशः । भिन्नो दारितसक्तावित्यमरः ।

---

[1] विविश- A B C F H भिन्न- D

L

विलोडयन्ति यस्य बलिरिवात्मघोषमुखरो मण्डलभ्रमणचक्रकस्य मत्तमातङ्ग इव स्तवमालोलमुखोऽधरीकृतदानश्च वृषभ इव सुरभियानविकलः कामीव गोत्रस्खलनविधुरो वामाध्वा-

---

खेदोऽनुरागसंरक्षं तैलेऽपिच निगद्यते।

इति धरणिः।

वैशाखो दधिचारः स्यात् तन्नाटकरघर्षणौ।

इति हारावली।

यस्य बलिरिवात्मघोषेण काकेन मुखरः काकशब्देन सशब्दः। मण्डलभ्रमणं कुक्कुरभ्रमणं तत्कथकस्तत्सूचकः।

ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि।

इत्यमरः।

कौलेयकः सारमेयो मण्डलः श्वा गतत्रपः।

इति व्याडिः। पक्षे। आत्मघोषेणात्मस्तुत्या मुखरः। मण्डले देशादौ भ्रमणं तत्कथकः। मत्तमातङ्ग इव स्तवमायां निजकरशामालोलं मुखं यस्य सः। अधरीकृतदानः। मदजलस्याति-वर्षणादधरीकरणम्। पक्षे। सुष्ठ्वश्रमवाच्यवाचित्वादालोलं मुखं यस्य सः। अधरीकृतं दानं वितरणं येन।

वृषभ इव सुरभेर्गोर्यानेन गमनेन विकलो विक्लवस्तदनु-धावनेन वा विक्लवः। पक्षे। सुरभिया देवभयेन न विकलः। भीतिर्भीः साध्वसं भयमित्यमरः। कामीव गोत्रस्खलनं नाम-स्खलनं तेन विधुरः। वामानां स्त्रीणामध्वा मार्गस्तत्रानुरक्तः।

तुरङ्गमाणामजीर्णविकार इव कलेवरे वयसि मन्दिमानमावहति
वञ्चक इव [1]कटपले [2]रङ्को विभावरीरङ्कस्य परेत इव

---

प्रतीपदर्शिनी वामा वनिता महिला तथा ।

गोत्रं तु नाम्नि चेत्युभयत्रामरः । पक्षे । गोत्रस्खलनं वंशजस्ख-
लनम् । वामाख्या विपरीताचरणम् । वामौ वल्गुप्रतीपौ चेत्य-
मरः । अजीर्णविकार इव कलेवरे शरीरे वयसि वयसे मन्दि-
मानमावहति । अथ कलेवरम् । गात्रं वपुः संहननमित्य-
मरः । पक्षे । कलेऽव्यक्तमधुरे वरे श्रेष्ठे वयसि वयसे मन्दिमा-
नमावहति वाचाट इति भावः ।

वञ्चक इव शृगाल इव श्वेव वा कटपले मृतमांसे रङ्कः ।
विभावर्यां रात्रौ रङ्कश्च । शृगालवञ्चकक्रोष्टु- । विभावरीत-
मस्विन्यौ रजनीत्युभयत्रामरः ।

अप्रतारकचौरेषु वञ्चकः परिकीर्तितः ।

इति शाश्वतः ।

कटः समयबन्धेऽपि तृणेऽपि मृतकेऽपि च ।

इति विश्वः ।

पलः प्रतारणे काले शय्यामांसे पलं मतम् ।

इति धरणिः । पक्षे । कटे समयबन्धे पलः प्रतारणं तस्मिन् रङ्कः
शपथपूर्वकप्रतारक इति भावः ।

---

१ कटफले D इति अम॰ च म ८॰ च ।　२ शङ्को H

बन्धुतापदर्शनः परशुरिव भद्रश्रियमपि खण्डयति कुद्दाल इव [1]दलितगोत्रः क्षमाभाजः प्राणिनो [2]निकृन्तति[3] रत-

---

विभो स्वामिन्यरिः शत्रू रक्षो धनलोभादिना। अरी रक्ष इत्यत्र रो रीति लोपे ढ्रलोप इति दीर्घः।

समयाः शपथाचारकालसिद्धान्तसंविदः।

इत्यमरः।

परेत इव बन्धुताया बन्धुसमूहस्यापगतं दर्शनं यस्य।

ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः।

इत्यमरः। ग्रामजनबन्धुभ्यस्तलिति तल् प्रत्ययः। पक्षे। बन्धून् तापयति तादृशं दर्शनं यस्य।

परशुरिव भद्रश्रियं चन्दनं खण्डयति। भद्रश्रीश्चन्दनो-ऽस्त्रियामित्यमरः। पक्षे। भद्रं कल्याणम्। श्रियं लक्ष्मीम्। श्विवं भद्रं कल्याणं मङ्गलं शुभमित्यमरः। यद्वा भद्रश्रियं साधु-सम्पदम्।

सश्रीके चन्दनेऽपि स्याद्भद्रश्रीः साधुसम्पदि।

इति धरणिः।

कुद्दाल इव दलिता गोत्रा पृथ्वी येन। क्षमां पृथ्वीं भजन्ति तादृशान् प्राणिनो वृक्षादीन् निकृन्तति छिनत्ति। वृक्षादीनां प्राणित्वं भवेरहिंसार्थस्य नेति वार्तिक आकरे स्पष्टम्। कुद्दा-

---

१ विद- D H २ निष्कृन्तति A B D। ३ + जीवितं A B G H

कोल इव जघन्यकर्मलग्नो[1] क्षेपयति साधून् दुष्टघूर्पश्रुति-रिव काननरुचिरनुगतमपि [2]यवसं ततं नानुमोदते। अनी-

रीति भाषायाम्। पक्षे। दलितगोत्रो नाशितवंशजः। क्षमा-भाजः शान्तियुताम् प्राणिनो मनुष्यान्। क्षितिक्षान्त्योः क्षमे-त्यमरः।

रतकोल इव कुक्कुर इव जघन्यकर्मलग्नो मार्ग एव सुरतादौ प्रवृत्तः। क्षेपयति साधून्। कुक्कुरो रात्रिजागरः।

रसनालिट् रतपराः कौलशायिश्वणान्दुकाः।

इति हेमचन्द्रः। रतपरा रतशब्दात् पराः कौलादयः। तथाच रतकौलादयस्त्वत्वारः शब्दा इति कोशार्थः। पक्षे। जघन्यकर्म नीचकर्म।

दुष्टघूर्पश्रुतिरिव दुष्टगज इव कानने वने रुचिर्यस्य। अनुगतम्। ततं विस्तृतम्। यवसं तृणम्। नानुमोदते। द्विपायि-घूर्पश्रुतिकुम्भिसामजा इति हारावली। यवसं तृणमर्जुन-मित्यमरः। पक्षे। कोषदानरुचिर्वदनकान्तिर्यस्य। ईषदर्थे चेति कादेशः। लोकानां धिक्काराद्धीनकान्तिरिति भावः। अनुगतमपि यवसं हव्यं ततं वीणादिवाद्यं च नानुमोदते। यवसो हव्यघासयोः।

ततं वीणादिवाद्येऽपि विस्तारेऽपि ततं मतम्।

इत्युभयत्र विश्वः।

---

१ -संलीनो D  २ अनं चततं B C F

जादेव आयान्त्यकाण्डादेव प्ररोहन्ति[1] खलव्यसनाङ्कुरा दुरुच्छेदा[2] भवन्त्यसतां हि[3] हृदि प्रविष्टो दोषलवः करालायते। सतां तु [4]हृदि न [5]विशत्येव[6] यदि [7]कदाचिद्विशति[8]

---

खलव्यसनाङ्कुरा अबीजादेवाकारणादेव जायन्ते। अकाण्डादेवाप्रस्तावादेव प्ररोहन्ति। अतएव दुरुच्छेदा भवन्ति। यो हि बीजाज्जायते काण्डात् स्कन्धात् प्ररोहति स सूच्छेदो भवति मूलत्वादिति भावः। हेतुर्ना कारणं बीजम्। अस्त्री प्रकाण्डः स्कन्धः स्यादित्युभयत्रामरः।

असतां हृदि प्रविष्टो दोषलवः करालायते भयावहो भवति। सतां हृदि तु न विशत्येव। दोषलव इति शेषः पूर्वोत्तरयोरपि। यदि कदाचिद्विशति। पारद इव क्षणमात्रमपि नावतिष्ठते। रसः सूतश्च पारद इत्यमरः। हृदय इति शेषः।

अथ यदि वदति किमर्थमुपदिशसि। असदुक्तं वा न तदुपदेशमुरीकरोमीति तत्राह। साधवः सन्तो मृगा इव हरिणा इव विनोदबिन्दोर्विनोदवेदितुर्मृगरमणपटोः पुंसः श्रवणेनाकर्णनेन वशगा भवन्ति। ज्ञाता तु विदुरो विन्दुरित्यमरः। वीणा श्रूयते मृदङ्गः श्रूयत इत्यादौ तद्ध्वनिवत् पुंसः श्रवणेन तद्गीतश्रवणं लक्ष्यते। तथाच माघः।

---

१ -ात् प्रसरन्ति A B C F G प्रभवन्ति D H २ -द्या A B -दाश D ३ पुनर् D ४ —हृदि C D F H ५ प्रवि- A B F G ६ + भूयो A B C F G + भूयोऽपि H ७ कथमपि A B C D F G H ८ + तदा C D E F G H

पारद[1] इव [2]क्षणमात्रमपि [3]नावतिष्ठते साधवो मृगा इव विनोदविन्दोः [4]श्रवणवश्यगाः सुखं जनाः [5]शरत्समया इव भवादृशा [6]मित्रस्य हृदयं हरन्ति न च सचेतना[7] विसदृशमुपदिशन्त्यचेतनानामपि मैत्री [8]समुचितपक्षे[9] निक्षिप्ता। तथा-

अश्रावि भूमिपतिभिः क्षणवीतनिद्रै-
रश्नन् पुरो हरितकं मुदमादधानः।
ग्रीवाग्रलोलकलकिङ्किणिकानिनाद-
मिश्रं दधद्दशनबुर्बुरशब्दमश्वः॥

इति। पक्षे। विनोदविन्दोर्धातुः। आख्यातोपयोग इति पञ्चमी। श्रवणेन समुपदेशश्रवणेन वशगास्तदधीनास्तादृशाः शरत्समया इव भवादृशा जनाः सुखं जनयन्ति। पिण्डीमित्यादौ भक्षणादिक्रियाक्षेपवत् सुखमित्यनेन जननक्रियाक्षेपः। अतएव मित्रस्य हृदयं हरन्ति। पक्षान्तरे। शरत्समयाः सुखञ्जनाः शोभनाः खञ्जना येषु तादृशाः। खञ्जरीटस्तु खञ्जन इत्यमरः। सचेतना मित्रस्येति शेषः। विसदृशमयोग्यं नोपदिशन्ति। अचेतनानामपि मैत्री समुचितपक्षे योग्यपक्षे निक्षिप्ता तर्हि सचेतनमैत्र्याः का कथेति भावः। समानशील-

१ + -पिण्ड D २ क्षणमपि A B C D F G H ३ न तिष्ठति A B C F G H ४ श्रमवश्यगा A B H वशगा C F श्रमगा D इति जग० च। ५ शर-द्वासरा D इति नर० च। ६ इति नर० च। सुखमावहन्ति A D —मित्रस्य हृदयं C D E H इति जग० च। ७ सचेतसो D इति नर० च। ८ समुचिता भवति इति नर०। ९ -पक्षमि- C D E F H

हि माधुर्यशैत्यस्वच्छत्वसन्तापशान्तिभिः पयः पय इवेति[1] मित्रतामुपगतस्य[2] दुग्धस्य [3]तत्सङ्गमादर्धितस्य[4] क्वाथेन[5] ममैव पुरो युक्तः पय इति विचिन्त्येव वारिणापि[6] चीयते। तदिदमसाम्प्रतमाचरितं[7] सखे गृहाण साधुजनोचितमध्वानं सा-

---

व्यसनेषु सख्यमितीममर्थं द्योतयन्नुभयसाधारणानि विशेषणान्याह। माधुर्येत्यादि।

माधुर्यशैत्यस्वच्छत्वसन्तापशान्तिभिर्गुणैः पयो जलं पय इव दुग्धमिवेति मित्रतामुपगतस्य तत्सङ्गाद्दुग्धसङ्गादर्धितस्य बहुमूल्यतामापन्नस्य पुरः पूर्वं ममैव पयो युक्त इति विचार्य वारिणा चीयते। भावे प्रत्ययः। मीलितालङ्कारोऽत्र।

समेतलक्ष्मणा वापि वस्तुना यन्निगूह्यते।
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम्॥

इति लक्षणात्।

तत् तस्मादिदमाचरितमसाम्प्रतमयुक्तम्। सखे साधुजनोचितमध्वानं व्यवहारं गृहाण। साधवो हि द्विड्द्रोहात् परं केवलमुत्पथप्रवृत्ता उन्मार्गप्रवृत्ता भवन्ति न तद्व्यवहार इत्यर्थः। इत्यादि तस्मिन् मकरन्दे वदति सति। स्मरशर-

---

१ पय इति A B C D H इति जग० च नर० च। २ -तामुपेतस्य D H ३ तत्स- A B C D E F H इति जग० च। ४ -इवर्धितस्य A B F G -दुग्ध-र्धितस्य D ५ क्वाथे C D E G ६ वारि इति जग०। + प्रथमं A B ७ + भवता A B G

धवो हि दिक्क्षोभात् परमुत्पथप्रवृत्ता[1] भवन्तीत्यादि वदन्ति तस्मिन् कथमपि स्मरशरनिकरप्रहारपरवशः परिमिताक्षर-मुवाच [2]कन्दर्पकेतुः । वयस्य दितिरिव शतमन्युसमाकुला भवति [3]मनोवृत्तिः । नायमुपदेशकालः[4] पच्यन्त इवाङ्गानि[5]

---

निकरप्रहारपरवशः कामबाणव्यथाव्याकुलः । कथमपि महा-क्षोभात् परिमिताक्षरमुवाच ।

वयस्य सखे चित्तवृत्तिर्दितिरिव दैत्यजननीव शतमन्युने-न्द्रेण समाकुला व्याकुला भवति । पक्षे । शतसङ्ख्याका मन्यवस्तैः समाकुला शाकपार्थिवादिः । दितेर्गर्भनाशाय दितिप्रमादा-द्दितिगर्भे प्रविष्टः शक्र एकं गर्भं सप्तधा विभज्य सप्तधा विभक्तं प्रतिव्यक्ति सप्तधा बभञ्जेति । त एवोनपञ्चाशद्वाता बभूवुरिति पुराणे प्रसिद्धम् । शतमन्युर्दिवस्पतिः । मन्युशोकौ तु शुक् स्त्रियाम् । वयस्यः स्निग्धः सवया इति त्रिष्वमरः ।

स्वस्थे चित्ते बुद्धयः सम्भवन्तीत्याह । नायमुपदेशकालः । कुतः । अङ्गानि पच्यन्त इव । शिथिलावयवानीव भवन्तीत्यर्थः । कर्मकर्तरि साधुः । एवमग्रेऽपि । इन्द्रियाणि क्वथ्यन्त इव । क्वा-थपाकयोर्भेदान्न पौनरुक्त्यम् । मर्माणि भिद्यन्त इव । विदीर्णानि

---

१ + अपि पुनर्गृहीतपथा D  २ — कन्दर्पकेतुः B G  ३ इति अम॰ च मर॰ च । सज्जनमनोवृत्तिः A B C D E F G H  ४ + तथाहि D + कुतः E G H  ५ इव मेऽङ्गानि D.

कृष्यन्त इवेन्द्रियाणि भिद्यन्त[1] इव मर्माणि [2]निःसरन्तीव प्राणा उन्मूल्यन्त[3] इव विवेका नष्टा[4] स्मृतिः। तदधुना यदि त्वं[5] [6]सहपांशुक्रीडनसमदुःखसुखोऽसि तदा मामनुगच्छेत्युक्त्वा [7]परिजनालक्षितस्तेन सह [8]नगरान्निर्जगाम।

अनन्तरं कतिपयनक्षत्रगतमध्वानं गत्वागस्त्यवचनसंहृत-

---

भवन्तीत्यर्थः। प्राणा निःसरन्तीव। विवेका उन्मूल्यन्त इव। उत्पाट्यन्त इव। स्मृतिर्नष्टा। मागधी रीतिरत्र। ततोऽधुना यदि पांशुक्रीडने समदुःखसुखः। एतेन बाल्यसखत्वं ध्वनितम्। राजकुमाराणामेतादृक्क्रीडासम्भवेऽपि लोकप्रवादानुकरणम्। तेन लोकोक्तिरलङ्कारोऽत्र।

लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते।

इति लक्षणात्। तदा मामनुगच्छेत्युक्त्वा परिजनेनालक्षितस्तेन मकरन्देन सह नगरान्निर्जगाम।

अनन्तरं नगराद्बहिर्गमनोत्तरं कतिपयनक्षत्रगतं तावत्परिमितमध्वानं मार्गं गत्वा ताभ्यामिति शेषः। विन्ध्यो नाम गिरिरदृश्यतेति सम्बन्धः। किष्कुर्हस्ते वितस्तौ च। नल्वः किष्कुचतुःशतम्। इत्युभयत्रामरः।

अगस्त्यवचनेन संहृतं ब्रह्माण्डगतं शिखरसहस्रं येन सः। कूटोऽस्त्री शिखरं शृङ्गमित्यमरः।

---

१ छिद्यन्त A B C F G H २ निःसरन्त इव A B ३ उन्मथ्यन्त H ४ नष्टेव D ५ + मया D E F G H इति क्रम॰ च। ६ सह॰ -क्रीडित- C D H इति अग॰ च। ७ परिजनानुपलक्षि- A B F G ८ पुरा- A B C H.

[1]अश्मावटगर्तनिर्झरसङ्कटः [2]कन्दरान्तरालतामण्डपसुख[3]-
[4]सुप्तविद्याधरमिथुनगीताकर्णनसुखितचमरीशतमारणोत्सुकित-
[5]तच्छबरशतसम्बाधकच्छः कटककरिकराकृष्टभग्नस्यन्दमा-

---

अनुप्रासेनाह। कन्दरा दरी तदन्तराले लतामण्डपं तत्र सुखेन सुप्तानि विद्याधरमिथुनानि तेषां गीतं गानं तदाकर्णनेन सुखितं चमरीणां मृगभेदस्त्रीणां शतं तन्मारणोत्सुकितं शबरशतं तेन सम्बाधः सङ्कटः कच्छस्तटो यस्य सः। दरी तु कन्दरो वा स्त्री।

निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः।
भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः॥
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः।
सङ्कटं ना तु सम्बाधः कलिलं गहनं समे।

इति पञ्चस्वमरः। कूलं प्रतापः कच्छरोधसी। तटं तीरं प्रतीरं चेति हैमः। कच्छारिरिति भाषायाम्।

कटकेऽद्रिनितम्बे करिकरैर्हस्तिशुण्डाभिराकृष्टान्यत एव भग्नान्यत एव स्यन्दमानानि प्रस्रवमाणानि हरिचन्दनानि तेभ्य

---

१ अश्मावटवप्र- A C G H इति जग॰ च। अश्मावटवप्रन- D इति नर॰ च। अश्मावटकाष्ठ- E २ कन्दरान्तरगतलता- A B F कन्दरान्तरलता- C D ३ -मण्डपसुखप्रसुप्त- A C D F G -मण्डपसुप्त- B ४ सुप्तप्रबुद्धविद्याधर- D सुप्त॰ -मिथुनगीता- D सुप्त॰ -चमरीगण- A B C F H सुप्त॰ -चमरमृग- D
५ तत्किरातशत- A B.

नहरिचन्दनामोदवाहिगन्धवाहशिशिरितशिलातलः सुदूरपतनभग्नतालफलरसार्द्रकरतलास्वादनोत्सुकशाखामृगः[१] प्रल-[२]म्बमाननिर्झरोपविष्टजीवञ्जीवमिथुनलेलिह्यमानविविधफल-

---

आमोदोऽतिनिर्हारिगन्धस्तद्वाही गन्धवाहो वायुस्तेन शिशिरितं शिशिरवदाचरितं शिलातलं यत्र सः। कटकोऽस्त्री नितम्बोऽद्रेः। आमोदः सोऽतिनिर्हारी। गन्धवाहानिलाशुगाः। सुषीमः शिशिरो जडः। तुषारः शीतलः शीतः।

पञ्चैते देवतरवो मन्दारः पारिजातकः।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥

इति पञ्चस्वमरः। हस्तिनाशा करः शुण्डा हस्त इति हैमः। स्यन्दू प्रस्रवणे।

सुदूरपतनेन भग्नानि तालफलानि तेषां रसेनार्द्रयोः करतलयोरास्वादनेन लेहनेनोत्सुकाः शाखामृगा वानरा यत्र सः। तृणराजाह्वयस्तालः। शाखामृगवलीमुखाः। मर्कटो वानरः कीश इत्युभयत्रामरः।

प्रलम्बमानान्यतएव निर्झरेषूपविष्टानि यानि जीवञ्जीवमिथुनानि चकोरमिथुनानि तैर्लेलिह्यमानानि पुनः पुनरास्वाद्यमानानि तादृशानि च तानि विविधफलानि तेषां रसामोदेन सुरभितः परिसरः प्रान्तदेशो यस्य। लेलिह्यमानेति

---

१ -मृगकदम्बः A B C E F G इति जग० च मर० च। -मृगकदम्बकः D H
२ म्बमाननिर्झरपयरसविधोप- C म्बमाननिर्झरशिखरोपान्तोप- D.

रणामोदसुरभितपरिसरः सरभसकेसरिसहस्रखरनखर[१]-धाराविदारितमत्तमातङ्गकुम्भस्थलविगलितमुक्ताफलप्रबलि[२]-तशिखरतया शिरोलग्नं तारागणमिवोद्वहन् सुग्रीव इव

---

यत्कुसुमगन्धात् कर्मणि शानच्। जीवञ्जीवस्तकोरकः । पर्यन्तभूः परिसर इत्युभयचामरः ।

सरभसं सवेगं केसरिसहस्रस्य सिंहसहस्रस्य खरनखरधारया विदारितानि मत्तमातङ्गकुम्भस्थलानि तेभ्यो विगलितानि मुक्ताफलानि तैः प्रबलितशिखरतया शिरोगतं तारागणमिव नक्षत्रसमूहमिवोद्वहन्। हर्यक्षः केसरी हरिः । नखोऽस्त्री नखरोऽस्त्रियाम्। नक्षत्रमृक्षं भं तारेति चिम्बमरः ।

पुनः श्लेषेणाह । सुग्रीव इव । ऋक्षो जाम्बवान् गवयः शरभः केसरी कुमुद एतत्प्रमुखैर्वानरैः सेव्यमानपादच्छायः । ते च रामायणे ।

गजो गवाक्षो गवयः शरभो गन्धमादनः ।

इति । पक्षे । ऋक्षो भल्लूकः । गवयो वनगवः । शरभः कुञ्जरद्विट्। केसरी सिंहः । कुमुदं कैरवं दिग्गजो वा । तैः सेव्यमाना पादानां प्रत्यन्तपर्वतानां छाया यस्य सः । ऋक्षाच्छभल्लभल्लूकाः । पादाः प्रत्यन्तपर्वताः । इत्युभयत्रामरः ।

---

१ -खरतरनखर- D २ -फलपटलप्रबलित- D रा० -फलप्रबलशि- A B C D H -फलविगलितशि- F.

[1]सहस्रगवयशरभकेसरिकुमुदसेव्यमानपादच्छायः[2] पशुपतिरिव नागनिःश्वाससमुत्क्षिप्तभूतिर्जनार्दन इव विचित्रवनमालः सहस्रकिरण इव सप्तपत्रस्यन्दनोपेतो[3] विरूपाक्ष इव

---

गवयः स्यादनगवो गोसदृक्षोऽस्ववारणः।

शरभः कुञ्जराराातिरुत्पादकोऽष्टपादपि।

इत्युभयत्र हैमः।

कपीन्द्रः कुमुदः कोऽपि कुमुदः कोऽपि दिग्गजः।

इति शाश्वतः।

पशुपतिरिव शिव इव नागनिःश्वासेन सर्पनिःश्वासेन समुत्क्षिप्ता भूतिर्भस्म यस्य सः। पक्षे। नागनिःश्वासेन गजनिःश्वासेन समुत्क्षिप्ता भूतिः सम्पत्तिर्यस्य सः। यद्वा। नागानां निधिस्थानस्थितसर्पाणां निःश्वासेनेत्यादि।

जनार्दन इव विष्णुरिव विचित्रा वनमाला यस्य सः।

आपादपद्मं या माला वनमालेति सा स्मृता।

इति शाश्वतः। पक्षे। विचित्रा वनमाला वनपरम्परा यस्य सः।

सहस्रकिरण इव सूर्य इव सप्त पत्राणि वाहनानि यस्मिन् तादृशो रथो यस्य। पत्रं वाहनपक्षयोरित्यमरः। पक्षे। सप्तपत्रो विषमच्छदः। स्यन्दनस्तिनिशः। सप्तपर्णो विशालत्वक्। तिनिशे स्यन्दनो नेमिरित्युभयत्रामरः।

---

१ स्वचमवाघ्रगवयगजशरभकेसरिकुमुदपनससेव्य- D  २ -पादपच्छायः B C इति अम० च।  ३ सप्तपत्रकुलोपेतो F.

**सन्निहितगुहः [१]शिवानुगतस्य कामीव कान्तारोधरसानुगतः समदनस्य श्रीपर्वत इव सन्निहितमल्लिकार्जुनो नरवाहनदत्त**

---

विरूपाक्ष इव शिव इव सन्निहितो गुहः कार्त्तिकेयो यस्य सः। शिवया पार्वत्यानुगतस्य। पक्षे। सन्निहिता गुहा गह्वरं यस्य सः। शिवाभिर्धात्रीभिः क्रोष्ट्रीभिरनुगतस्य।

शिवा गौरी शिवा क्रोष्ट्री भवेदामलकी शिवा।

इति शाश्वतः। देवखातबिले गुहा। गह्वरम्। शिवा गौरी फेरवयोरित्युभयत्रामरः।

श्रीपर्वत इव सन्निहितो मल्लिकार्जुनो यस्य। मल्लिकार्जुनो नाम हरः। पक्षे। सन्निहितौ मल्लिकार्जुनौ यस्य।

तृणशून्यं मल्लिकायां त्रिषु स्यात् केतकीफले।

इति विश्वमेदिन्यौ।

नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः।

इत्यमरः।

कामीव कामुक इव कान्तानां रोधरसाभ्यामनुगतः। समदनस्य। पक्षे। कान्तारभूधरसाभ्यामनुगतः। समदनः सधत्तूरः। धत्तूरः कनकाह्वयः। मातुलो मदनश्च। कान्तारं वर्त्म दुर्गमम्। ऊधवानूधरौ द्वावप्यन्यलिङ्गाविति त्रिष्वमरः।

नरवाहनदत्तस्तन्नामको राजा तद्वत् प्रियङ्गुश्यामया तन्नामकस्त्रिया सनाथः। पक्षे। प्रियङ्गुः फलिनी। श्यामा रोच-

---

१ शिवानुरक्तस्य A B.

इव प्रियङ्गुश्यामासनाथः शिशुरिव [1]कृतधात्रीधृतिर्वासरा-रम्भ[2] [3]इव गैरिकारुणप्रभापाटलितवनराजिः कृष्णपक्ष इव बकुलतागहनः कर्ण इवानुभूतशतकोटिदानो भीष्म इव शि-

गी। प्रियङ्गुः फलिनी फलीत्यमरः। विभण्डी रोचनी श्यामेति च। श्वेतविधारेति ख्याता।

शिशुरिव बालक इव कृता धात्र्या आमलक्या धृतिरवस्थानं येन। पक्षे। धात्र्युपमाता।

धात्री स्यादुपमातापि चितिरप्यामलक्यपि।

इत्यमरः।

वासरारम्भ इव गैरिकारुणप्रभया पाटलिता वनराजिर्वनपरम्परा जलसंहतिर्वा यस्य। श्वेतरक्तस्तु पाटल इत्यमरः। अव्यक्तरागस्त्वरुण इति च। पक्षे। गैरिकवदरुणस्य सूर्यसूतस्य प्रभा तया। सूर्यसूतोऽरुणोऽनूरुरित्यमरः।

कृष्णपक्ष इव बकुलता कृष्णता तया गहनः। भावे तल्।

बकुलः कृष्णपक्षेऽग्नौ शितौ च बकुला गवि।

इति विश्वप्रकाशः। कोशे शितौ कृष्णे। पक्षे। बकुलताभिर्गहनः सान्द्रः। वल्ली तु व्रततिर्लतेत्यमरः।

कर्ण इवानुभूतं शतकोटीनां तत्संख्याकधनानां दानं वित-

---

१ इर्शितधा- A B F H २ -द्युतिर्वासरारम्भ A B F ३ इवायम A B C D F H इति अम० च नर० च। इ० -पद्मप्रभा- A B.

खण्डिमुक्तैरर्द्धचन्द्रैराचितः कामसूत्रविन्यास इव [1]मल्लनाग-घटितः कान्तारसामोदश्च[2] हिरण्यकशिपुरिव शम्बरकुला-श्रयो [3]गैरिकव्याजाद्रविरथमार्गमार्गणार्थमिवारुणेनोपास्य-

---

रणं येन। पक्षे। अनुभूतं शतकोटिना वज्रेण दानं येन। दो अवखण्डने। शतकोटिः स्वरुः शम्ब इत्यमरः।

भीष्म इव शान्तनव इव शिखण्डिमुक्तैरर्धचन्द्रैस्तदाकारैर्बा-णैराचितो व्याप्तः। पक्षे। शिखण्डो बर्हं तदस्ति येषां ते शिख-ण्डिनो मयूरास्तैर्मुक्तैरर्धचन्द्रैरर्धमेचकाख्यैः पक्षैः। अर्धचन्द्रेण तदाकारयुक्ता लक्ष्यन्ते। शिखण्डस्तु पिच्छबर्हे नपुंसके। समौ चन्द्रकमेचकाविति द्वयोरमरः।

कामसूत्रविन्यास इव मल्लनागेन मुनिविशेषेण। पक्षे। गज-विशेषेण। घटितो रचितो युक्तश्च।

मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि।

इति विश्वप्रकाशः। कान्तानां रसामोदौ शृङ्गारहर्षौ येन। पक्षे। कान्तारे दुर्गवर्त्मनि कानने वा सामोदोऽतिसुगन्धः।

हिरण्यकशिपुरिव शम्बरो दैत्यविशेषस्तत्कुलाश्रयः। पक्षे। शम्बरो हरिणविशेषो जलं वा द्रव्यं वा। रङ्कुशम्बररौहिषाः। नीरक्षीराम्बुशम्बरमित्युभयत्रामरः।

---

१ मन्दनाग- इति नर०। २ -रसानुमोदश्च A B ३ गैरिकरागव्या- A C D E F इति नर० च। गै० -व्याजादुपरिगतरवि- A B गै० -व्याजादुपरिरवि- C D E G H गै० -व्याजादुपरिष्टाद्रवि- F.

मानः शिखरगतसूर्याचन्द्रमस्तया विस्तारितलोचनोऽगस्त्य-मार्गमिवोद्वीक्षमाणः स्रस्तान्त्रजाल[1] इव [2]जरदजगरभोगैः कुम्भकर्ण इव दन्तान्तरालगतवानरव्यूहः[3] [4]पिण्डालक्त-

---

शम्बरं सलिले वित्ते बौद्धव्रतविशेषयोः ।
शम्बरो दैत्यहरिणमत्स्यशैलजिनान्तरे ॥

इति विश्वप्रकाशः ।

गैरिकव्याजाद्रविरथमार्गस्य मार्गणार्थमन्वेषणार्थमिवारुणेनानूरुणोपास्यमानः । मृग अन्वेषणे ।

शिखरगतसूर्याचन्द्रमस्तया । देवताद्वन्द्वे चेत्यानङ् । विस्तारितलोचनो विकासितनेत्रोऽगस्त्यमार्गमुद्वीक्षमाण इव । यावदहमागच्छामि तावत् त्वमुपविशेत्युक्त्वा गतो मुनिरायाति न वेति मार्गावलोकनमिति पुराणप्रसिद्धम् ।

जरदजगरभोगैर्वृद्धशयुशरीरैः स्रस्तान्त्रजालो विगलितान्त्रसमूह इव । अन्त्रं पुरीतत् । इत्यमरः ।

तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ ।

इति च ।

कुम्भकर्ण इव दन्तान्तराले दशनान्तराले गतो वानरव्यूहो यस्य । पक्षे । दन्तः कटकः सानुतिर्यग्विनिर्गतः शिलाविशेषो वा । तदन्तरालगतवानरयूथः ।

---

१ -आल A B -जाल C E   २ जरदजगराभोगैः D   ३ दन्तान्तरालगतैर्वानरसमूहैः C दन्तान्तरालगतैर्वानरव्यूहैः D E G — समूहः F   ४ पिण्डालक्तकाङ्कि- A B C D G H.

करागाङ्गनपादपङ्क्तिखचितसञ्चरित्राचीपनिवारविलासिनी-सङ्केतकेतकीमण्डपोऽकुलीनोऽपि सद्वंशभूषितो दर्शिताभ-योऽपि मृत्युफलदायी सप्रस्थोऽप्यपरिमाणः सनदोऽपि निः-

---

दन्तो गिरिर्नितम्बे च दन्तने सानुनि स्नुतः।

इति विश्वः।

दन्तकास्तु बहिर्निर्यत्प्रदेशाश्चिता गिरेः।

इति हैमः।

पिण्डीभूतमलक्तकं पिण्डालक्तकं तद्रागेणाङ्किताना पा-दानां चरणानां पङ्क्तिभिः परम्पराभिः खचितं सञ्चरितं सञ्च-रणं येषु। भावे क्तः। तादृशाः श्चीपनिवारविलासिनीना-मुर्वश्यादीनां सङ्केतकेतकीमण्डपा यस्मिन् सः।

विरोधाभासेनाह। अकुलीनोऽपि निकृष्टगोत्रोऽपि सद्वंशे-नोत्तमकुलेन भूषितो मण्डित इति विरोधः। न कौ पृथिव्यां लीनोऽकुलीनोऽत्युच्चत्वात्। शोभनैर्वंशैर्वेणुभिरलङ्कृत इति परिहारः।

दर्शितमभयं येन स मृत्युजनकं फलं दातुं शीलमस्य ता-दृश इति विरोधः। दर्शिताभया हरीतकी येन। मृत्युफलं महाकालफलं कदलीफलं वा दातुं शीलमस्य तादृगिति परिहारः। अभया तव्यथा पथ्येत्यमरः।

मृत्युफलं महाकाले कदल्यां मृत्युफलापि।

शब्दो भीमोऽपि कीचकसुहृत् पिहिताम्बरोऽप्युल्लसदंशुको विन्ध्यो नाम [1]महागिरिरदृश्यत।

---

इति विन्ध्यः। सप्रस्थः परिमाणविशेषविशिष्टः। अपरिमाणः परिमाणरहित इति विरोधः।

कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्।

इत्यमरः। सप्रस्थः ससानुरित्यविरोधः। स्नुः प्रस्थः सानुर-स्त्रियामित्यमरः। नदेन शब्देन सहितः सनदो निःशब्द इति विरोधः। णद अव्यक्ते शब्दे। नदेन शोणाख्यनदेन सहितो निःशब्द इत्यविरोधः।

भीमोऽपि युधिष्ठिरानुजोऽपि कीचकसुहृत् तन्नामराक्षस-सुहृत्। विराटगृहावस्थितः कीचकः पाञ्चाल्यां साभिलाष इति भीमेन हत इति भारते प्रसिद्धमिति भीमस्य कीचकसुहृ-त्त्वं विरोधः। भीमो भयानकः कीचका वंशविशेषास्तेषां सुहृत्।

वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः।

इत्यमरः।

पिहिताम्बरश्छादितवस्त्रः। उल्लसत् स्फुरमाणमंशुकं वस्त्रं यस्य स इति विरोधः। चेलं वसनमंशुकमित्यमरः। पिहित-माच्छादितमम्बरमाकाशो येन। उल्लसन्तः स्फुरमाणा अंशव एवांशुकाः स्वार्थे कः। किरणा यस्य सः। इति परिहारः। अम्बरं व्योम्नि वाससि। किरणोऽस्त्रमयूखांशुरित्युभयत्रामरः।

---

१ गिरिरदृश्यत D E G H इति अग॰ च।

यस्य प्रवृद्धगुल्मतयेव दृश्यमानबहुधातुविकारः साधुरिव सानुग्रहप्रचारप्रकटितमहिमा मीमांसान्याय इव पिहितदिगम्बरदर्शनः । यस्य हरिवंशैरिव पुष्करप्रादुर्भावरम-

---

श्लेषेणाह । यो विन्ध्यः प्रवृद्धगुल्मतया प्रवृद्धस्तम्बतयेव दृश्यमानो बहुधातूनामनेकगैरिकादीनां विकारो यत्र तादृक् । अप्रकाण्डे स्तम्बगुल्मौ । धातुर्मनःशिलाद्यद्रेरित्युभयत्रामरः । पक्षे । प्रवृद्धगुल्मतया प्रवृद्धप्लीहतया दृश्यमानो बहुधातूनां रसादीनां विकारो यस्य सः । गुल्मस्तु प्लीहा पुंसीत्यमरः ।

रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।
सप्तैव दश वैकेषां रोमत्वक्स्नायुभिः सह ॥

इति हैमः । मता इति शेषोऽत्र ।

साधुरिव सानुग्रहः सकृपः प्रचारस्वरणं तेन प्रकटीकृत उद्योतितो महिमा स्वोत्कर्षो येन सः । पक्षे । सानुषु शिखरेषु ग्रहाणां सूर्यादीनां प्रचारेण भ्रमणेन प्रकटीकृतो महिमोन्नत्यं येन सः ।

मीमांसान्याय इव तच्छास्त्रमिव पिहितं तिरोहितं दिगम्बरदर्शनं दिगम्बरमतं येन । पक्षे । पिहितं छादितं दिगम्बरयोर्दिशाकाशयोर्दर्शनं येन सः ।

यो विन्ध्यो देवखातैरुपशोभितोपान्त इत्यन्वयः । हरि-

णीयैः राशिभिरिव मीनमिथुनकुलीरसङ्गतैः करणैरिव शकुनिनागभद्रबालवकुलोपेतैर्देवखातैरुपशोभितोपान्तः[१]। यस्य कुसुमविचित्राभिर्वंशपत्रपतिताभिः सुकुमारवल्लिताभिः पुष्पि-

---

वंशैरिव पुष्करप्रादुर्भाव व्याख्यानविशेषस्तेन। पक्षे। पुष्कराणां कमलानां जलानां वा प्रादुर्भावेण रमणीयैः। पुष्कराख्यौष-धाणि च। पुष्करं सर्वतोमुखमित्युभयत्रामरः।

राशिभिरिव ज्योतिःशास्त्रप्रसिद्धैर्मेषादिराशिभिरिव मीनो मिथुनं कुलीरः कर्कटस्तैः सङ्गतैः। पक्षे। मीनैर्मिथुनं कर्कटास्तैः सङ्गतैः।

करणैरिव ज्योतिषागमविख्यातैर्बवादिकरणैरिव शकुनिनाग-भद्रबालवानां तन्नामकानां कुलैः समुदायैरुपेतैः। पक्षे। शकुनिः पक्षी नागो गजः सर्पो वा भद्रो मुस्ता बालवकुलो लघुवञ्जुलः। अथवा बालं ह्रीवेरं वकुलो वञ्जुलस्तैरुपेतैः।

शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः।

मुस्ता मुस्तकमस्त्रियाम्। स्याद्भद्रमुस्तकः। वकुलो वञ्जुलः। बालं ह्रीवेरबर्हिष्ठोदीच्यमिति चतुर्ष्वमरः।

यो विन्ध्यो लताभिर्दर्शितानेकवृत्तविलास इति सम्बन्धः। कुसुमैर्विचित्राभिर्वंशपत्रेषु पतिताभिः शिखरिणीभिः। शिख-रमग्रं नयतीभिः शाखाभिरित्यर्थः। प्रहर्षिणीभिः। अन्तर्भा-वितण्यर्थोऽत्र हृषिः। प्रकर्षेण हर्षकारिणीभिः। सुकुमाराश्च

---

१ -शोभितप्रान्तः F. -शोभितान्तः H इति वर० ख।

ताग्राभिः शिखरिणीभिः [1]प्रहर्षिणीभिर्लताभिर्दर्शितानेकवृत्तविलासः।

यस्य [2]मदकलकलहंससारसरसितोद्भ्रान्तभाःकूटविकटपुच्छच्छटाव्याधूतविकचकमलखण्डविगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया [3]सायन्तनमज्जनपुलिन्दराजसुन्दरी-

---

खचिताश्च ताभिः। पुष्पितानि सञ्जातपुष्पाण्यग्राणि यासां ताभिः। पक्षे। तत्तदभिधानैश्छन्दोभिः। म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्। रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी। नयसहिते न्यौ कुसुमविचित्रा। कुमारललिता जसौ ग्। दिङ्मुनि वंशपत्रपतितं भरनभनलगैः।

पुनरनुप्रासेनाह। यो विन्ध्यो रेवयोपगूढ इत्यन्वयः। मदेन कलमव्यक्तमधुरं कलहंसानां कादम्बानां सारसानां पुष्कराख्यानां रसितं शब्दस्तेनोद्भ्रान्ता भाःकूटा मत्स्यविशेषास्तेषां विकटपुच्छच्छटाभिर्व्याधूतविकचकमलखण्डाद्विगलितमकरन्दबिन्दुसन्दोहेन सुरभितसलिलया। कादम्बः कलहंसः स्यात्। पुष्कराह्वस्तु सारस इत्युभयत्रामरः।

भाःकूटः कथ्यते मीनभेदे शैलान्तरेऽपि च।

---

१ प्रहर्षिणीभिर्लताभिश्छन्दोविचितिभिरिव दर्शि- D इति नर० च। २ समद- C D इति नर० च। मद० -भाःकूटकूट- A B C इति नर० च। मद० -न्तशफरकुलपुच्छघटाव्या- F मद० -पुच्छकच्छया- B D इति नर० च। मद० -न्तभाःकूटविकटपुच्छकच्छघटया- इति अम०। ३ सायन्तनसमयोन्मज्जत्पु- A B C E F G सायन्तनसमयमज्जनपु- D सायन्तरसमयमज्जत्पु- F H.

नाभिमण्डलनिपीतसलिलया मदमुखरराजहंसकुलकोला-हलमुखरितकूलपुलिनया[1] [2]तटनिकटमत्तमातङ्गगण्डपि-[3]ण्डविनिर्गतमदधारास्तबकितसलिलया तीरप्ररूढकेतकी-[4]काननिपतितधूलिनिकुरम्बजातसैकतसुखोपविष्टतरुणसुर-[5]

---

इति विश्वप्रकाशः। भागुर इति भाषायाम्।

सायन्तने सायङ्कालिके मज्जने पुलिन्दराजसुन्दरीणां श-बराङ्गनानां नाभिमण्डलैर्निपीतसलिलया। सायं चिरमित्या-दिना ट्युट्तुडागमश्च।

मदमुखरराजहंसकुलस्य कोलाहलः कलकलस्तेन मुखरितं कूलपुलिनं यस्यास्तया।

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।

कोलाहलः कलकलः। कूलं रोधश्च तीरं च। तोयोत्थितं तत् पुलिनमिति चतुर्थ्वमरः। कोशे तदित्यनेन तटम्।

तटनिकटमत्तमातङ्गगण्डपिण्डविनिर्गतमदधाराभिः स्तब-कितं सञ्जातस्तबकं सलिलं यस्यास्तया। गण्डः कटो मदो दानमित्यमरः।

तीरप्ररूढकेतकीकाननिपतितधूलेर्निकुरम्बं समूहस्तेन जातं यत् सैकतं तत्र या।

---

१ मद॰ -मुखरितपुलिनया C D H २ तटनिकटविकटमत्त- B D F तट॰ मत्तमत्त- A ३ ण्डनिर्गलित- A B D E G ण्डनिर्गत- C F H ४ काननकुसु-मनि- D ५ -तरुणतरसुर- D.

मिथुननिधुवनलीलापरिमलसाक्षिकूलोपवनया [1]तटाटवीनिकटनिपतितजम्बूखण्डमण्डपावस्थितजलदेवतावगाह्यमानतोयया [2]तीरप्ररूढवेतसलताभ्यन्तरलीनदात्यूहव्यूहमदक-

---

सुखोपविष्टसुरमिथुननिधुवनलीला तस्यां परिमलो विमर्दजन्मा जनमनोहरो गन्धस्तत्साक्षि कूलोपवनं तीरकृत्रिमवनं यस्यास्तया। उपवनस्य परिमलसाक्षित्ववर्णनेन सर्वथा जनसञ्चारराहित्यं ध्वन्यते। अत्र चैकतनशब्दप्रयोगस्तत्रत्य औपचारिकः।

विमर्दोत्थे परिमलो गन्धे जनमनोहरे।

मैथुनं निधुवनं रतम्।

आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।

इति चामरः।

तटेऽटवी वनं तस्या निकटे निपतितानि जम्बूखण्डानि तेषां मण्डपेष्ववस्थितजलदेवताभिरवगाह्यमानतोयया। अटव्यरण्यं विपिनमित्यमरः।

तीरप्ररूढवेतसलताभ्यन्तरलीनदात्यूहव्यूहः कालकण्ठकसमूहस्तस्य मदकलो यः कुहकुहारावः कुहकुहशब्दस्तेन कौतुकं तदाकृष्टसुरमिथुनैः संस्तूयमान आभोगः परिपूर्णता

---

१ तटावटविघटितजम्बू- D तटाटवीनिकटविघटितजम्बू- F तटाटवीघटित-जम्बू- H २ तीरप्ररूढवेतसवनाभ्य- A B F तीर॰ -निलीन- A B C E F G H तीर॰ -विलीन- D

सकुचकुक्कुटारावकौतुकाकृष्टसुरमिथुनसंस्तूयमानाभोगयोप[1]-
[2]कूलसञ्जातनलनिकुञ्जपुञ्जितकुलायकुक्कुटघटाघूत्कारभैर-
वतीरया [3]जलमानुषीमृदितसुकुमारतीरूढोपवनवातान्दो-

---

यस्यास्तया। दात्यूहः कालकण्टकः। आरवारावसंरावविरा-
वा इति द्वयोरमरः। आभोगः परिपूर्णतेति च। उपवनोप-
भोग- इत्यपि पाठः।

उपकूलं सामीप्येऽव्ययीभावः। तत्र सञ्जातो नलनिकुञ्जो
लतादिच्छादितो देशस्तत्र पुञ्जितः पुञ्जवदाचरितोऽनेक इत्य-
र्थः। तादृक् कुलायो नीडं यस्याः सा चासौ कुक्कुटघटा
कुक्कुटसमूहस्तस्या घूत्कारेण तादृशशब्देन भैरवं भयानकं तीरं
यस्यास्तया। शैलोपशल्यनिपतद्रथनेमिधारा इत्यादौ उप-
शल्यशब्दस्यान्त इवात्र घटाशब्दस्य समुदाये प्रयोगो भाक्तः।
कुक्कुटस्ताम्रचूडः। अथ भैरवम। दारुणं भीषणं भीष्मम्।

निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे।

कुलायो नीडमस्त्रियाम्। नडस्तु धमनः पोटगल इति चतु-
र्थ्वमरः।

जलमानुषीमृदितसुकुमारपुलिनया। वनमानुषवज्जलमा-
नुषः प्राणिविशेषः। जातेरस्त्रीविषयादिति ङीष्।

---

१ -मानकूलोपभोगयोप- A B -मानोपभोगयोप- C D E F G H २ कू॰ -जवनल- F कू॰ -कुञ्जपुञ्जपुञ्जित- D ३ जलमानुषम्- C D H जल॰ -कुसुम-सुकुमार- A B E F

लिततरलतरङ्गया [1]नलनिकुञ्जपुञ्जनिविष्टावकोटककुटुम्बि-
नीनिरीक्ष्यमाणार्द्धशफरया [2]पोताधानलुब्धकोयष्टिकस्कभ-
नभीमवेतसवनया [3]तरलतरङ्गमालासञ्चरदुद्दण्डपालद-

---

उपवनपवनान्दोलिततरलतरङ्गया। एतेनाच वाते गुणचयं वर्णितम्। तेन कामिनां सर्वदा सुखकारिताख्य ध्वनिता।

नलनिकुञ्जपुञ्जे निविष्टोऽवकोटको बकस्तत्कुटुम्बिनी स्त्री तया निरीक्ष्यमाणोऽर्धशफरो दण्डपालो यस्यां तया।

बकोऽवकोटकस्त्वाथ बलाका तु बकी स्मृता।

इति हारावली। दण्डपालोऽर्धशफर इति च।

पोताधानं क्षुद्राण्डमत्स्यसङ्घातस्तच लुब्धकोयष्टिकस्य टिट्टिभकस्य स्कभनं शब्दस्तेन भीमं वेतसवनं यस्यास्तया। स्कभः सौत्रो धातुरनेकार्थत्वाच्छब्दार्थः। क्षुद्राण्डमत्स्यसङ्घातः पोताधानम्। कोयष्टिकष्टिट्टिभक इति द्वयोरमरः।

तरलतरङ्गमालायां सञ्चरदुद्दण्डपालो मत्स्यविशेषस्तद्दर्शनेन धावदतिचपला या राजिलराजिर्डुण्डुभसमूहस्तेन रञ्जितमुपकूलं यस्यास्तया। समौ राजिलडुण्डुभावित्यमरः।

भवेदुद्दण्डपालस्तु सर्पमत्स्यप्रभेदयोः।

---

१ नलिनकु- C न० -निविष्टनष्टबकोट- A न० -निविष्टनष्टधूर्तबकोट- B न० -निविष्टधूर्तबकोट- C F न० -निविष्टवष्टरकोटि- D H न० -निविष्टवटबकोड- E न० -निविष्टबककोक- G २ पो० -स्कभनभी- A E F G इति नर० च। पो० -स्वनभी- C पो० -स्वक्षणभी- D ३ तरङ्गमा- A B C F H तरमरङ्ग- F तर० -मालान्तरसञ्च- A B तर० -सञ्चालितोद्दण्ड- D

[1]शंनधावदतिचपलराजिलराजिरञ्जितोपकूलसलिलया [2]क-णाटीरमिथुनमैथुनदर्शनोपजातनिधिग्रहणकौतुककिरातश-

---

इति विग्रप्रकाशः।

कणाटीरः खञ्जनस्तन्मिथुनमैथुनदर्शनेनोपजातं निधि-ग्रहणकौतुकं येषां तादृक्किरातशतेन खन्यमानतीरया। क-णाटीरः। खञ्जलेखस्तु खञ्जन इति हारावली। कौतूहलं कौतुकं च।

भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः।

इति द्वयोरमरः। तथाच वराहमिहिरः।

तस्मिन् निधिर्भवति मैथुनमेति यस्मिन्
यस्मिन् पुनर्वमति तत्र तलेऽस्थि काचः।
अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य
तत्कौतुकाय नयनस्य खनेद्धरित्रीम्॥

इति। वत्सराजोऽपि।

अङ्गारखण्डं किल भूमिभागे
तस्मिन् भवेद्यत्र करोति विष्ठाम्।
यत्रावनौ खञ्जनको विधत्ते
रतं भवेत् तत्र महानिधानम्॥

इति।

---

१ शंनधावितच- B H शंन° ·राजिविराजितोप- C D तर° -राजिराजितोप E २ कणाटीमि A कलाटीमि- B कल्लटीडमि- C F काखाडीवमि- D कणाडावमि· H इति तर° च। कणाचीममि- इति अन°।

सखन्यमाननीरया क्रुद्धयेव दर्शितमुखविभङ्गया[१] मत्तयेव [२]स्खलितगत्या दिनारम्भलक्ष्म्येव [३]वर्धमानवेलया भारतसमरभूम्येव नृत्यत्कबन्धया प्रावृषेव विजृम्भमाणशतपत्रपिहित-

---

क्रुद्धयेव दर्शितो मुखस्य वदनस्य विभङ्ग ओष्ठभ्रूकुटीविकारादिर्यया। पक्षे। मुखविभङ्गो निःसरणतरङ्गो यया। मुखं निःसरणास्ययोरिति धरणिः। भङ्गस्तरङ्ग ऊर्मिर्वेत्यमरः। मत्तयेव स्खलिता गतिर्यस्यास्तया। पक्षे। स्खलिता तिर्यग्गतिः प्रवाहो यस्यास्तया। दिनारम्भलक्ष्म्येव वर्धमाना वेला कालो यस्यां तया। पक्षे। वेला मर्यादा।

अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि।

इत्यमरः।

भारतसमरभूम्येव नृत्यत्कबन्धमपमूर्द्धं कलेवरं यस्यां सा। पक्षे। जलम्।

कबन्धः सलिले रुद्रे कबन्धो राक्षसान्तरे।

इति विश्वः।

कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धं कलेवरम्।

इत्यमरः।

प्रावृषेव विजृम्भमाणैः शतपत्रैर्मयूरैः पिहिता मयूरभक्षणभयादितस्ततश्छन्ना विषधराः सर्पा यस्यां तया।

---

१ -मुखभङ्गया A B C F H इति सम० च सर० च। २ स्खलद्गत्या C D F
३ प्रवर्ध- A B C G

विषधरया[1] जलकामयेव कृतभूभृत्सेवया[2] रेवया प्रियतमयेव प्रसारितवीचिहस्तयोपगूढः । यश्च[3]

हरिखरनखरविदारितकुम्भस्थलविकलवारणध्वानैः ।
अद्यापि कुम्भसम्भवमाक्रयतीवोच्चतालभुजः ॥

ततो मकरन्दस्तमुवाच ।

---

शतपत्रः सितापाङ्गः प्रचलाकी च चन्द्रकी ।

इति हारावली । पक्षे । विजृम्भमाणशतपत्रैः कुशेशयैः पिच्छि-ताम्भसा विषधरा जलधरास्तडागादयो यस्यां तया । विषं क्ष्वेडे जलेऽपि चेति विश्वः । शतपत्रं कुशेशयमित्यमरः । धने द्रव्ये कामोऽभिलाषो यस्यास्तयेव । कृता भूभृतो राज्ञः सेवा यया । पक्षे । विन्ध्यस्य प्रसारितवीचिहस्तया प्रियतमयेवो-पगूढः ।

हरीति । यो विन्ध्यः । उच्चस्ताल एव भुजो यस्य सः । हरि-खरनखरविदारितकुम्भस्थलविकलवारणध्वानैरद्यापि कुम्भ-सम्भवमगस्त्यमाक्रयतीवागच्छागच्छेत्याक्रानं करोतीवेत्यर्थः । कु-ञ्जरो वारणः करीत्यमरः । अगस्त्यः कुम्भसम्भव इति च । उत्प्रे-क्षालङ्कारः । आर्या वृत्तम् ।

ततो गिरिदर्शनोत्तरं मकरन्दस्तं कन्दर्पकेतुमुवाच । स्व-भावोक्त्याह । पश्येति । उदञ्चदुत्तिष्ठद्वाञ्चदधोगच्छदञ्चितं

---

१ -धारया A B इति अम० च । २ -भूभृदुत्सवया D ३ + -विन्ध्यशैल-शेखरः । H

पश्चोदस्थदवाग्रदर्शितवपुः पश्चार्द्धपूर्वार्द्धभाक्
स्तब्धोत्तानितपृष्ठनिष्ठितमनाग्भुग्नाग्रलाङ्गूलभृत्।
दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन् सटामुत्कटा-
मुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी॥

अपिच।

उत्कर्णोऽयमकाण्डचण्डिमपटुः स्फारस्फुरत्केसरः[1]
क्रूराकारकरालवक्त्रविकटस्तब्धोर्ध्वलाङ्गूलभृत्।

---

वपुः पूर्वार्धपश्चार्धं भजति तादृक्। अपरस्यार्धे पश्चभावो वक्तव्य इति पश्चादेशः। स्तब्धोत्तानितपृष्ठे निष्ठितं स्थितं तादृक्। मनागीषद्भुग्नमग्रमस्य तादृक्। लाङ्गूलं पुच्छस्तं बिभर्ति तादृक्। दंष्ट्राकोटिभिर्विशङ्कटं वृहदास्यकुहरं मुखगर्भो यस्य तादृक्। उद्गतौ कर्णौ यस्य सः। सटामुत्कटां कुर्वन् क्रूराकृतिः। केसरी सिंहः। करिपतौ गजवरे क्रमं पादविक्षेपं कुरुते पश्य। पश्य मृगो धावतीत्यादाविवात्र क्रियायाः कर्मत्वम्। पुच्छोऽस्त्री लूमलाङ्गूलम्। विशङ्कटं पृथु वृहदित्यमरो द्वयोः। सटाजटा-केसरयोरिति हैमः। स्वभावोक्तिरलङ्कारः।

स्वभावोक्तिस्तु तस्यैव जात्यादिस्थस्य वर्णनम्।

इति लक्षणात्। शार्दूलविक्रीडितं वृत्तम्। सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितमिति लक्षणात्।

उत्क्रममाणं वर्णयित्वाक्रान्तगजं वर्णयति। उत्कर्ण इति।

---

१ -पटुस्फारस्फुरत्केसरः A B F इति क्रम० च।

चित्रेणापि न शक्यतेऽभिलिखितुं सर्वाङ्गसङ्कोचनात्[1]
चीत्कुर्वन्गिरिकुञ्जकुञ्जरशिरःकुम्भस्थलस्थो हरिः ॥
अनन्तरं शीघ्रदेशनस्येव न्यग्रोधोपचितयोऽनरगोशृक्त-

---

उत्कर्णः। अकाण्डचण्डिमपटुः। स्फारं बहु स्फुरन्तः केसरा यस्य। क्रूराकारं करालं वक्त्रं मुखं तेन विकटो भयानकः। स्तब्धं निश्चलमूर्ध्वमुत्क्षिप्तं लाङ्गूलं बिभर्ति तादृक्। चीत्कुर्वन् गिरिकुञ्जकुञ्जरशिरःकुम्भस्थलस्थोऽयं पुरोवर्ती हरिः सिंहः सर्वाङ्गसङ्कोचनाच्चित्रेणाप्यभिलिखितुं न शक्यते। अत्र शिरःपदमधिकम्।

तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे।
पुन्नागवृक्षे किञ्जल्के केसरः स्यात्। इति हैमः।

अनन्तरं सिंहावलोकनानन्तरं विन्ध्याटव्या विन्ध्यारण्येन कतिचित् पदानि गत्वा कामिन इव मदनशलाकाङ्कितस्य अन्यूवृक्षस्य शीतलच्छायायां विश्रामेत्यन्वयः। मदनशलाका सारिर्वा पाठशालिनीति हारावली। पक्षे। मदनशलाका कामोद्दीधको वर्तिविशेषः।

मदनशलाकां कामी सिद्धौषधमप्ययं वदति।

इति गर्गः। स्यान्मदनशलाकापि सार्था कामोद्दीपधाविति विश्वप्रकाशः। नखक्षतमिति केचित्।

---

१ सर्वाङ्गसङ्कोचभाक् A B C D F H

मरुभूम्येव [1]विजृम्भमाणवृहन्नलया मरुदेशढक्कायात्रयेव[2] घनसारसार्थवाहिन्या विदग्धजनमधुपानगोष्ठ्येव नानाविटपी-

---

नीचदेशनयेव निम्नभागनयेव न्यग्रोधोऽधःप्रदेशावरोधनं तेनोपचितया वृद्धया। पक्षे। न्यग्रोधैर्वटैरुपचिता तथा। न्यग्रोधो बहुपाद्वट इत्यमरः।

उत्तरगोग्रहसमरभूम्येव विजृम्भमाणो बृहन्नलोऽर्जुनः।

उत्तरस्तु विराटस्य तनये दिशि चोत्तरे।

इति विश्वप्रकाशः। पक्षे। बृहन्नडो धमनस्य यस्यां तथा।

ढक्काया ढक्काध्वनेर्यात्रा गमनं ढक्कायात्रा मरुदेशस्य ढक्कायात्रा तयेव घनो मेघस्तत्सारः पानीयं तदर्थं सार्थः समूहस्तद्वाहिनी तत्प्रापिका। यद्वा ढक्केत्यनेन तद्ध्वनिः सा चासौ यात्रोत्सवः। उदकमुदकं कूपादित्येवंरूपस्तद्दया। अन्यत् पूर्ववत्। गमनोत्सवयोर्यात्रेति विश्वः। मरुदेशे जलार्थिनो ढक्काध्वनिश्रवणाज्जलमुद्गतमम्भोरिति निकषा प्रयान्तीति प्रसिद्धम्। पक्षे। घनसारः कर्पूरम्। पुष्पफलहीनः करवीरसमानाकारपत्रः क्षुपभेदो वा।

घनसारस्तु कर्पूरे वृक्षभेदे जलेऽपि च।

इति विश्वः। ढक्कयात्रेति लपपाठः। असञ्ज्ञात्वान्ङ्यापोः सञ्ज्ञाछन्दसोरित्यस्याप्रवृत्तेः।

विदग्धजनमधुपानगोष्ठ्येव नानाविटैरनेकखिड्गैः पीत आ-

---

१ विज्ञम्भित- A B C F G H  २ -ढक्कयेव F

P

तासवया नलकूबरचित्तवृत्त्येव सततधृतरम्भया मत्तमातङ्ग-गत्येव [1]घण्टारवावेदितमार्गया सदीश्वरसेवयेवादूरोद्गत-बहुफलया[2] विराटलक्ष्म्येवानन्दितकीचकशतया विन्ध्याट-व्या कतिचित् पदानि[3] गत्वा कामिन इव मदनशलाकाङ्कि-तस्य[4] जम्बूवृक्षस्य [5]शीतलच्छायायां विशश्राम।

---

सवो मद्यं यस्याम्। खिङ्गः पालविको विटः। मैरेयमासवः शीधुरित्यमरः। पक्षे। नानाविटपिव्याप्तं जातमासवं लाक्षा-दिकं यस्यां तया। नलकूबरः कुबेरपुत्रस्तच्चित्तवृत्त्येव सततं धृता रम्भा तन्नामिकाप्सरसो यया। अस्येत्यनुवृत्तौ पुत्रस्तु नलकूबर इति कुबेरप्रकरणेऽमरः। पक्षे। सततं धृता रम्भा कदली यया।

कदली वारणबुसा रम्भा मोचांशुमत्फला।

इत्यमरः।

मत्तमातङ्गगत्येव घण्टाया रवः शब्दस्तेनावेदितमार्गया। पक्षे। घण्टारवा वृक्षभेदः। घण्टारवा तु शणपुष्पिकेत्यमरः। सदीश्वरसेवयेवादूरोद्गतानि बहूनि बहुविधानि भूयांसि वा फलानि यस्यां तया। पक्षे। अदूरं शीघ्रमुद्गतानि बहूनि

---

१ घण्टारवविदित- A C घण्टारवाविदित- B D F H २ -शोफलया F H ३ इति अम० च मर० च। कतिपयपदं दूरं A B कतिपयपदं C कतिपय-मदूरमध्वानं E कतिपयदूरं F कतिपयपदानि G ४ + विकर्तनस्येव स्निग्ध-च्छायस्य वैकुण्ठस्येव लक्ष्मीभृतो याचोद्यतन्पतेरिव घनपत्रशोभितस्य राजाव-सथस्येव भूरिशालालंकृतस्य गाणिक्यस्येवानेकपल्लवोज्ज्वलस्य B C ५ तलच्छा-यायां A B C D F इति मर० च।

अत्रान्तरे[1] भगवानपि मरीचिमाल्यातपक्लान्तमत्तम[2]हिषलोचनपाटलमण्डलश्चरमाचलशृङ्गमारुरोह। ततो मकरन्दः फलमूलान्यादाय [3]कथं कथमपि तमभिनन्दिताहारपरिचयमकार्षीत् स्वयं च तदुपभुक्तशेषमशनमकरोत्। अथ तामेव प्रियतमां हृदयफलके सङ्कल्प्य तूलिकया लिखि-

---

धनाद्यनिष्टनिवारणादीनि फलानि यस्यां तया। विराटलक्ष्येवानन्दितं कीचकानां तत्कुलानां शतं यया। पक्षे। कीचका वंशविशेषाः।

वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः।

इत्यमरः।

अत्रान्तरेऽस्मिन्नवसर आतपक्लान्तमत्तमहिषलोचनवत् पाटलो मण्डलो यस्य तादृङ्मरीचिमाली सूर्यश्चरमाचलशृङ्गमस्तगिरिशिखरमारुरोह। श्वेतरक्तस्तु पाटलः। अस्तस्तु चरमः क्ष्माभृदिति द्वयोरमरः।

ततोऽस्तमनोत्तरं मकरन्दः फलमूलान्यादाय तं कन्दर्पकेतुमभिनन्दिताहारपरिचयमकार्षीत्। स्वयं च तद्भुक्तशेषाशनमकरोत्।

अथ फलाद्यशनोत्तरं हृदयफलके हृदयपट्टे सङ्कल्प्य तूलिकया कूर्चिकया लिखितां तामेव स्वप्नदृष्टामेव प्रियतमा-

---

१ अनन्तरं A B २ हिषलोहितलोचनसमानमण्डल- H ३ —कथं C D H

मामिवावलोकयन्[1] निस्पन्दकरणग्रामः कन्दर्पकेतुर्मकरन्द-विरचितपल्लवशयने सुष्वाप।

अथार्धयाममात्रावखण्डितायां[2] यामवत्यां तत्र जम्बूतरु-शिखरे शुकसारिकयोर्मिथः कलहायमानयोः कलकलं श्रुत्वा कन्दर्पकेतुर्मकरन्दमुवाच। वयस्य [3]शृणुवस्तावदेनयोरालाप-

---

अवलोकयन् पश्यन् निस्पन्दकरणग्रामो निश्चलसकले-न्द्रियः कन्दर्पकेतुर्मकरन्दविरचितपल्लवशयने सुष्वाप। अथ तूलिका कूर्चिकेति हेमः। नक्तव्रतकन्दमूलाशनपल्लवशयनश-यनेन गिरौ तपश्चरणं ध्वनितम्।

गिरेः सद्यः फलदातृत्वं दर्शयति। अथेत्यादिना। अथ शयनोत्तरमर्धयाममात्रावखण्डितायां विभावर्यां तत्र जम्बू-तरुशिखरे तस्मिन् जम्बूवृक्षाग्रे मिथः कलहायमानयोः शुक-सारिकयोः कलकलं श्रुत्वा कन्दर्पकेतुर्मकरन्दमुवाच। मिथो-ऽन्योन्यं रहस्यपि। द्वौ यामप्रहरौ समावित्यमरः।

किमित्याह। वयस्येति। वयस्यैनयोरालापं तावच्छृणुव इति।

ततः कलहानन्तरं शारिका। प्रकोपतरलाक्षरं क्रियाविशेष-णम्। उवाच। कितव धूर्त सारिकान्तरमन्विष्य। अन्वेषणेन तया सह सम्बन्धो लभ्यते। समागतोऽसि। अन्यथा सारिकान्तरसम्ब-न्धाभावे। तवेत्यस्य तद्रागमने लघुता। दृश्यते रात्रिरिति।

---

१ -लोकयन् C F G २ -मात्रखण्डितायां C -यामखण्डितायां D -मात्रपरि-खण्डितायां H ३ शृणुवस्तावदनयो- F शृणुवस्तावदेनयो- G}

पमिति। [1]ततः सारिका[2] प्रकोपतरलाक्षरमुवाच। कितव सारिकान्तरमन्विष्य समागतोऽसि कथमन्यथा[3] रात्रिरियती गतेति। तच्छ्रुत्वा शुकस्तामवादीत्। [4]भद्रेऽपूर्वाद्य कथा[5] मया श्रुता प्रत्यक्षीकृता च तेनायं [6]कालातिपातः। अथ समुपजातकुतूहलया सारिकयानुरुध्यमानः[7] कथयितुमारेभे।

---

तच्छ्रुत्वा शुकस्तां सारिकामवादीत्। भद्रेऽद्यापूर्वा कथा श्रुता प्रत्यक्षीकृता च। कथायाः शब्दप्रबन्धस्य प्रत्यक्षासम्भवात् तदर्थभूतक्रियाया अपि प्रत्यक्षासम्भवात् तदाश्रया जना लक्ष्यन्ते। तेनायं कालातिपातः। मदागमनेऽतिकाल इत्यर्थः।

अथ शुकवाक्श्रवणोत्तरं समुपजातकुतूहलया सारिकयानुरुध्यमानः अपथादिना भूयो भूयोऽर्थ्यमानः। शुक इति शेषः। कथयितुमारेभे।

कुसुमपुरं नाम नगरमस्तीत्यन्वयः। कीदृशमेवमभिरूपशोभितम्। सुधाधवलैः। सुधा लेपोऽमृतं स्नुहीत्यमरः। चुही इति प्रसिद्धं लेपनद्रव्यम्।

बृहत्कथा गुणाढ्यकृतिस्तदारम्भैरिव शालभञ्जिकोपेतैः। शालभञ्जिका नायिकाविशेषः। पक्षे। शालभञ्जिका पुत्तलिका। शालभञ्जी पाञ्चालिका च पुत्तलिकेति हैमः।

---

१ ततश्च सा सारिका अभूतपूर्वमिव चिरायागतं शुकं प्रको- D २ + असूयाकुलचित्ता चिरादागतं शुकं D ३ कथमितरथा C E F ४ भद्रेऽपूर्वा कथा A C E F G भद्रे मा प्रकोपं कुर्वपूर्वा मया कथा B H ५ कथापि D ६ कालोऽतिपातः G ७ निरुध्यमानः A -ऽनुरुध्यमानः C F + कथां C + शुकः कथां D

अस्ति [1]सुधाधवलैर्मन्दरारम्भैरिव[2] [2]शालभञ्जिकोप-स्तम्भैरिव समाणवककीडितैः करियूथैरिव समत्तवारणैः सु-ग्रीवसैन्यैरिव सगवाक्षैर्बलिभवनैरिव सुतलसन्निवेशैर्वेश्मभि-

---

वृत्तैरिव छन्दोभिरिव समाणवककीडितैः। माणवककी-डितं नाम छन्दो विशेषः। माणवकं भात्तलगाः। पक्षे। माण-वकानां शिशूनां क्रीडितानि तैः सहितानि तैः।

करियूथैरिव समत्तवारणैः समत्तगजैः। पक्षे। सनिर्यूहैः।

मत्तवारणमिच्छन्ति हाराक्षिप्तकरे द्विपे।
अट्टप्रासादवीथीनां वरण्डे चाप्यपाश्रये॥

इति विश्वप्रकाशः। निर्यूहो मत्तवारणमिति वैजयन्ती।

मत्तालम्बोऽपाश्रयः स्यात् प्रग्रीवो मत्तवारणः।

इति हैमः।

निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके।

इति विश्वप्रकाशः।

सुग्रीवसैन्यैरिव सगवाक्षैः। गवाक्षो वानरविशेषस्तत्सहितैः। पक्षे। सगवाक्षैः सवातायनैः।

बलिभवनैरिव सुतले पातालविशेषे सन्निवेशो येषां तैः। पक्षे। शोभनस्तलसन्निवेशो येषां तैः।

---

१ इति अग० ख नर० ख। मन्दरगिरिशिखरैरिव प्रशस्तसु- A मयूरशिखरै-रिव प्रशस्तसु- B मन्दरशृङ्गैरिव प्रशस्तसु- C मन्दरशिखरिशिखरैरिव प्रशस्तसु- D प्रशस्तसु- E G मन्दरशिखरैरिव प्रशस्तसु- H २ -याल्लम्भकैरिव D -याल्लम्भैरिव F इति अग० ख। २ शा० -कोपशोभितैः- C D F

रूपशोभितं[१] धनदेनापि [२]प्रचेतसाजापालेनापि रामेण प्रियं-वदेनापि पुष्पकेतुना भरतेनापि शत्रुघ्नेन तिथिपरेणाप्यति-

---

पौरजनेनानुगतमित्यन्वयः। धनदेनापि कुबेरेणापि प्रचेतसा वरुणेनेति विरोधः। धनदो धनदाता प्रकृष्टं चेतो यस्य स इत्यविरोधः।

अजापालो जाबालो रामः पशुविशेष इति विरोधः। केचित् लजापालो रामपूर्वजो रामो दाशरथिरिति विरोधः। जाबालः स्यादजाजीवः। रामः सृमरो गवयः शशः इत्यादयो मृगेन्द्राद्या इत्युभयचामरः। अकारो वासुदेवस्तस्माज्जातोऽजः कामस्तमापालयति तादृक्। अतएव रमयतीति रामः। णि-जन्तादच्। ततोऽण्। स्त्रीणां क्रीडाकारकस्तादृशेनेत्यविरोधः।

प्रियंवदो गन्धर्वविशेषः पुष्पकेतुः काम इति विरोधः। प्रियं वदति तादृक् तेन। प्रियवशे वदः खजिति खच्। अरु-र्द्विषदिति मुम्। पुष्पकेतुः पुष्पाभरणस्तेनेत्यविरोधः।

भरतः कैकेयीतनयः शत्रुघ्नः सौमित्रिरिति विरोधः। भे नक्षत्रे रतस्तेन ज्यौतिषिकेन शत्रुघातकेनेति परिहारः।

तिथौ विहिततत्तत्तिथिकर्मणि परेण रतेन। न तिथिस-त्कारपरोऽतिथिसत्कारपर इति विरोधः। अतिथीनामाग-

---

१ वल्लासितं A B C D G H इति जम० च नर० च। वज्ञासितं F
२ प० -षाजपा- C

[1]थिसत्कारपरेणासङ्ख्येनापि सङ्ख्यावताममर्मभेदिनापि वीरतरेणापतितेनापि नानासवासक्तेन[2] सुदर्शनेनाप्यचक्रेणाजात-

न्तूनां सत्कारपरेणेति परिहारः । आगन्तुरतिथिर्ना गृहागते । इत्यमरः ।

असङ्ख्येन सङ्ख्यागणनारहितेन सङ्ख्यावता सङ्ख्यासहितेनेति विरोधः । असङ्ख्येनायुद्धेन सङ्ख्यावता पण्डितेनेत्यविरोधः । मृधमास्कन्दनं सङ्ख्यम् । सङ्ख्यावान् पण्डितः कविरित्युभयत्रामरः ।

अमर्मभेदिना पीवरतरेण काण्डेन । काण्डस्य मर्मभेदित्वं प्रसिद्धम् । तद्भिन्नत्वेन वर्णनं विरोधः । अजिह्मगो वीरतरोऽस्त्रकण्टक इति हारावली । मर्म रहस्यं तदभेदकेन वीरतरेणातिशूरेणेति परिहारः ।

अपतितेन भूमावपतितेन नानासवासक्तेनानेकमद्यासक्तेनेति विरोधः । मैरेयमासवः सीधुरित्यमरः । अपतितेनाप्रायश्चित्तार्हेण । नाना सवा अनेकयज्ञास्तेष्वासक्तेनेति परिहारः । यज्ञः सवोऽध्वरो याग इत्यमरः ।

अजातमदेनासम्भूतदानेन सुप्रतीकेन तन्नामकगजेनेति विरोधः । अजातमदेनासञ्जाताहङ्कारेण सुष्ठु प्रतीकमङ्गं यस्य तेनेति परिहारः । अङ्गं प्रतीकोऽवयव इत्यमरः ।

सुदर्शनेनाचक्रेण । विष्णुचक्रस्य सुदर्शन इति सञ्ज्ञेति विरोधः । अचक्रेणादम्भेन ।

१ थिपरेणा- A B थिसत्कारप्रवणेना- C H थिप्रवणेना- F २ -सवसक्तेन D -सवारक्तेन F H

मद्रेणापि सुप्रतीकेनापक्षपातिनापि हंसेनाविदितस्नेहक्षयेणापि कुलप्रदीपेनाग्रन्थिनापि वंशपोतेन निदाघदिवसेनेव वृषविवर्धितरुचिना माघविरामदिवसेनेव तपस्यारम्भिणाग्रजे-

---

अनावर्णे समूहे च दर्भे भेदरथाङ्गयोः।

इति रन्तिदेवः। शोभनं दर्शनं यस्येत्यविरोधः।

न पक्षेण गरुता पततीत्यपक्षपाती तेन हंसेन पक्षिणेति विरोधः। अकारे विष्णौ पक्षपाती तादृशेन हंसेन विशुद्धेन निर्लोभेन वेति परिहारः। अकारो वासुदेवः स्यादित्येकाक्षरः।

हंसो विशुद्धे निर्लोभे श्रेष्ठे च विहगान्तरे।

इति विश्वः।

न विदितः स्नेहस्य तैलस्य क्षयो येन तेनापि कुलप्रदीपेनेति विरोधः। न विदितः स्नेहक्षयोऽनुरागक्षयो येन। कुलस्य वंशस्य प्रदीपेन प्रकाशेनेति परिहारः।

अग्रन्थिना पर्वरहितेन वंशपोतेन वंशाङ्कुरेणेति विरोधः। अग्रन्थिना शुद्धहृदयेन वंशपोतेन सत्कुलार्भकेणेत्यविरोधः।

निदाघदिवसेनेव वृषेण वृषभसङ्क्रमणेन विवर्धितरुचिना प्रवृद्धतापेनेत्यर्थः। पक्षे। वृषे धर्मे विवर्धितरुचिना। माघविरामदिवसेनेव तपस्यस्य फाल्गुनस्यारम्भिणा। स्यात् तपस्यः फाल्गुनिक इत्यमरः। पक्षे। तपस्या तपश्चरणं तदारम्भिणा।

अग्रजेणापि काव्यजीवज्ञेन शुक्रगुरुबुधेन। पक्षे। काव्यस्य जीवज्ञेनाशयज्ञेन।

यापि काव्यजीवज्ञेन [1]पौरजनेनानुगतं [2]घनागमदिवसेनेव दर्शितखण्डाभ्रेण वेलातटेनेव प्रवालमणिमण्डितेन[3] देवाङ्गनाजनेनेवेन्द्राणीपरिचयविदग्धेन[4] वनगजेनेव [5]पक्षव-

---

वेश्याजनेनाधिष्ठितमित्यन्वयः। घनागमदिवसेनेव दर्शितखण्डाभ्रेण दर्शितखण्डमेघेन। पक्षे। खण्डाभ्रं दन्तक्षतविशेषः। तथाच वामनः।

विचित्रमीषत्परिमण्डलं च क्षतैः समन्तादिशदैरुपेतम्।
खण्डाभ्रकं तद्दशनाग्रलेखं बिम्बाधरोत्सङ्गविभूषणाय॥

इति।

वेलातटेनेव प्रवाला विद्रुमा मणयश्च तैर्मण्डितेन। पक्षे। प्रवालैरुत्तमकेशैर्विद्रुमैर्वा मणिभिर्मण्डितेन। यद्वा। प्रवालमणिर्दन्तक्षतविशेषः। तथाच वामनः।

गाढं दन्तौष्ठसंयोगात् स प्रवालमणिर्भवेत्।

इति।

देवाङ्गनाजनेनेवेन्द्राणी शची तस्याः परिचयाद्विदग्धेन। पक्षे। इन्द्राणी रतौ बन्धविशेषः।

निजकचहृदयसङ्गतजानुभ्यां भवति चाभ्यासात्।
इन्द्राणीरचितत्वादिन्द्राणीत्याख्यया बन्धः॥ इति।

---

१ निवासिजने- A B C F विलासिजने- D H इति नर० च। २ घनापगम- A D घनागमेनेव इति जग० । ३ -मण्डनेन C F H इति जग० च। ४ -परिचित-त्वविदग्धेन C F G ५ नवपल्ल- A B C D E F G H इति नर० च।

पल्लवितरुचिना[1] कोकिलेनेव परपुष्टेन भ्रमरेणेव कुसुमेषु लालितेन जलौकसेव रक्ताकृष्टिनिपुणेन [2]याजकेनेव सुरतार्थिना महानटबाहुनेव[3] [4]वल्गद्भुजङ्गेन गरुडेनेव विलासिहृ-

---

वनगजेनेव पल्लवे किसलये पल्लविता विवृद्धा रुचिरिच्छा येन तेनेव । पक्षे । पल्लवैः पल्लवेषु वा विटैर्विटपेषु वा विवर्धितरुचिना ।

पल्लवः किसलये खड्गे विस्तारे विटपेऽपि च ।

इति विश्वः ।

कोकिलेनेव परस्मात् पुष्टेन । पक्षे । परमत्यर्थं पुष्टेन । भ्रमरेणेव कुसुमेषु पुष्पेषु लालितेन । पक्षे । कुसुमेषुणा कामेन लालितेन ।

जलौकसेव रक्ताकृष्टौ रुधिराकृष्टिस्तत्र निपुणेन । रक्तं क्षतजशोणितमित्यमरः । जलौकसेनेति पाठे पूर्वमोकःशब्दात् स्वार्थेऽण् पश्चात् समासः । पक्षे । रक्तानामनुरक्तानामाकृष्टिस्तत्र निपुणेन ।

शाब्दिकैस्तु जलौकाभिः कथितोऽयं जलौकसः ।

इति शब्दभेदप्रकाशः ।

याजकेनेव सुरता सुरत्वं तदर्थिना । भावे तल् । तलन्तं स्त्रियामिति स्त्रीत्वम् । पक्षे । सुरतं निधुवनं तदर्थिना ।

---

१ नवपल्लववर्धितरुचिना D इति नर० च । २ याचजूकेनेव D ३ -बाहुबन्धेनेव C
४ वद्दृष्टभुज- A B F वद्भुज- C D H

दयतापकरेणान्धासुरेणेव[1] शूलानामुपरिगतेन वेश्याजनेनाधिष्ठितं[2] कुसुमपुरं नाम नगरम् ।

[3]यत्र च [4]सुरासुरमौलिमालालालितचरणारविन्दा शू-

---

महानटबाहुनेव शिवभुजेनेव वलाभुजङ्गेन । पक्षे । वलाद्विलासिना । भुजङ्गोऽहिविलासिनोरिति विश्वः । गरुडेनेव बिल आविशतुमुपवेष्टुं शीलं येषां तेषां सर्पाणां हृदयतापकरेण । पक्षे । विलासिनां लासकृतविलसनशीलानां हृदयतापकरेण ।

अन्धासुरेणेव शूलानामुपरिगतेन । दारा इत्यादाविवावयवाभिप्रायेण बहुवचनम् । अन्धासुरो भैरवेण शूलाग्रे रोपित इति कथा । पक्षे । शूलानामुपरिगतेन । अन्यच स्थिताभ्यो वेश्याभ्योऽधिकेनेति भावः ।

मृत्यौ प्रहरणे शूलः केतने योगरोगयोः ।
खलादेश्च वधार्थाय कीलके पण्ययोषिति ॥

इति विश्वप्रकाशः ।

यत्र कुसुमपुरे वेतालाभिधाना स्वयं प्रतिवसतीति सम्बन्धः । सुरासुरेति स्पष्टम् । शुम्भनिशुम्भावेव महावनं तस्य

---

१ -तापकेनान्धकासुरेणेव D -णान्धासुरेणेव इति जम० । २ -नानुगतं H इति जम० च । ३ यत्र तु- A B G H ४ सुरासुरमुकुटमणिमाला- D E सुरासुरमुकुटमौलिमाला- F

म्भनिशुम्भमहावनदावज्वाला[1] महिषमहासुरगिरिवज्रसार-धारा[2] [3]प्रणयप्रणतगङ्गाधरजटाजूटस्खलितजाह्नवीजलधा-राधौतपादपद्मा[4] भगवती कात्यायनी [5]वेतालाभिधाना स्वयं प्रतिवसति।

यस्य च परिसरे [6]सुरासुरमुकुटकुसुमरजोराजिपरिमल-

---

दावज्वालारूपाग्निशिखा। दवदावौ वनारण्यवह्नी इत्यमरः। महिषेति रूपकम्।

विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्।

इति लक्षणात्।

प्रणयेन प्रीत्या प्रणतो गङ्गाधरस्तस्य जटाजूटात् स्खलिता या जाह्नवीजलधारा तया धौतपादपद्मा। एतेन न केवलं भर्त्रैव प्रणनाम किन्तु सपत्न्यापि पादक्षालनमाचरितमिति ध्वनितम्। तेनातिवल्लभात्वं ध्वनितम्।

यस्य पुरस्य परिसरे प्रान्ते भागीरथी गङ्गा वहतीति सम्बन्धः। सुरासुरेति। पितामहस्य ब्रह्मणः कमण्डलोर्धर्मद्रव-रूपा धारा। धरातलगतसगरसुतशतस्य सुरनगरसमारोहणार्थं पुण्यरज्जुः। ऐरावतस्य कटकषणेन गण्डस्थलघर्षणेन कम्पित-

---

१ -महादानवदावज्वाला A B -महावनदहनज्वाला C -महावमदावानल-ज्वाला D -महासुरवनदावज्वाला H २ -गिरिवरवज्रसारधारा C F H -गिरिदा-रणवज्रसारधारा D -गिरिवज्रधारा B D E H ३ प्रणयकलहप्र- A B D F H प्रणयकोपप्रसादनप्र- D इति जग० च। प्र० -जूटकूट- A B C F H ४ -पदपद्मा A B ५ वेतडाभि- D ६ सुरासुरमज्जनमर्मालितमु- C सुरासुरामज्जनमस्खलितम-खिमु- D

वाहिनी [1]पितामहकमण्डलुधर्मद्रवधारा [2]धरातलगतसगरसुतप्रतसुरनगरसमारोहणपुण्यरज्जुरैरावणकटकषणकम्पित[3]तटतरुचन्दनस्यन्दनसुरभितसलिला [4]सलीलसुरसुन्दरीनितम्बबिम्बाहतितरलिततरङ्गा [5]स्नानावतीर्णसप्तर्षिजटाटवी[6]परिमलपुण्यवेणीरेणतिलकमुकुटजटाजूटविकटकुहरभ्रान्तिजनितसंस्कारतयेव कुटिलावर्ता धरणीव सार्वभौमकरस्पर्शोपभोगक्षमा जलदकालसरसीव गन्धान्धोपरिभ्रमद्भ्रमर-

---

तटतरुचन्दनस्य स्यन्दनेन प्रस्रवणेन सुरभितसलिला। सलीलं क्रियाविशेषणम्। सुरसुन्दरीनितम्बबिम्बाहतिभिस्तरलतरङ्गा। स्नानावतीर्णसप्तर्षिजटाटव्याः परिमलपुण्यवेणिः पुण्यप्रवाहा। एणतिलकश्चन्द्रो मुकुटे यस्य तस्य जटाजूटविकटकुहरे भ्रान्तिर्भ्रमणं तेन जनितसंस्कारतयेव कुटिला आवर्ता जलभ्रमस्तद्वती। स्यादावर्तोऽम्भसां भ्रम इत्यमरः।

धरणीव सार्वभौमश्चक्रवर्ती। पक्षे। सार्वभौम उत्तरदिग्गजस्तस्य करस्पर्शोपभोगक्षमा। उभयोरेकदिक्त्वादिति भावः। स्पर्शः स्पर्शनदानयोरिति विश्वः।

जलदकालसरसीव गन्धान्धोपरिभ्रमन्तो चासौ भ्रमर-

---

१ पि० -निर्गलितधर्म- D २ रसातल- A B G ३ त० -स्यन्दमानरसधारासुर- D त० -चन्दनसन्दोहसुर- F ४ स० -सुरासुरसुन्दरी- B C ५ स्ना० -मालाविमलजटाजूटाटवी- A B स्ना० -मालाजटा- C D स्ना० -विमलजटा- E F G स्ना० -मालाविमलजटा- H ६ प० -रेणाङ्कित- A B F प० -जूटकूट- B C D H

मालानुमीयमानजलमग्नकुमुदपुण्डरीका छन्दोविचितिरिव मालिनीसनाथा[1] हतान्धतमसापि तमसान्विता [2]वीचिकलितापवीचिदुर्गमा भगवती भागीरथी [3]वहति।

यत्र दिशि दिशि तारागणमिव कुसुमनिकरमुद्वहद्भिरुप-

---

माला तथानुमीयमानानि जलमग्नकुमुदपुण्डरीकाणि यस्यां सा। पक्षे। कुमुदपुण्डरीकौ दिग्गजौ।

छन्दोविचितिर्ग्रन्थविशेषस्तद्वन्मालिनी छन्दोविशेषस्तेन सनाथा। ननमयययुतेयं मालिनी भोगिलोकैः। पक्षे। मालिनीनामिका नदी।

हतान्धतमसापि नाशितान्धकारापि तमसान्धकारेणान्वितेति विरोधः। तमसानामिकया नद्यान्वितेति परिहारः।

वीचिभिस्तरङ्गैः कलिता व्याप्तापि न वीचिभिर्दुर्गमेति विरोधः। पक्षे। अवीचिर्नरकभेदः।

तद्भेदास्तपनावीचिमहारौरवरौरवाः।

इत्यमरः।

सम्बन्धातिशयोक्त्याह। उपवनपादपैरुपशोभितमित्यन्वयः। दिशि दिशीति स्पष्टम्। अतएवोपहसितजलदैः। अनूरुरिति। अश्मादेस्ताडनी कशेत्यमरः। ग्रासो भक्षणम्। शेषं स्पष्टम्। चन्द्रेति स्पष्टम्।

---

१ + मधुपपङ्क्तिरिव स्वर्णममता सराजहंसा च C २ वीचिकलिता- H
३ प्रवहति A B G H

म्भितजलदैरनूरुकरकशाभिघातपरवशरविरथतुरगग्रासविष-[1]मितपल्लवैश्चन्द्रचमूरुचरणसङ्क्रान्तामृतकणनिकरसेकसञ्जातबहलसुकुमारनवकिसलयसञ्चयसन्दर्शिताकालसन्ध्याविभ्रमैर्भरतचरितैरिव सदारामाश्रितैर्महावीरैरिव नारिकेलीधरैरसंस्कृततरुणैरिवातिदूरप्रसारिताक्षैर्मत्तमातङ्गकुम्भस्थलदारणोद्धतसिंहैरिवोद्धतकेसरैः[2] सारिष्टैरपि चिरजीविभिरुपवनपादपै-

---

भरतचरितैरिव सदा रामाश्रितैः । पक्षे । सन् श्रेष्ठो य आरामस्तदाश्रितैः ।

असंस्कृततरुणैरिवातिदूरं प्रसारिते अक्षिणी यैस्तैः । कटाक्षदर्शनानभिज्ञत्वादिति भावः । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति षच् । यद्वातिदूरं प्रसारिता अक्षाः पाशका यैस्तैः । अथाक्षमिन्द्रिये । ना द्यूताङ्गे इत्यमरः । पक्षे । अक्षा विभीतकाः । विभीतकः ।

नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ।

इत्यमरः ।

मत्तमातङ्गकुम्भस्थलदारणोद्धतसिंहैरिवोद्धतकेसरैरुद्धूतस्कन्धकेशैः । जातिवर्णनमेतत् । पक्षे । केसरा वृक्षाः । चाम्पेयः केसरो नागकेसर इत्यमरः ।

---

१ मि॰ -विषरस- D H  २ -वोत्फुल्लकेसरैः A B C H  -वोल्लसत्केसरैः D -वोल्लासितकेसरैः F -वोपेतकेसरैः G

रूपशोभितमदितिजठरमिवानेकदेवकुलाध्यासितं[1] पातालमिव महाबलिशोभितं भुजङ्गाधिष्ठितं च सुरालयैरपि पवित्रं भोगिभिरपि [2]निरुपद्रवम्।

यत्र[3] च [4]सुरतभरखिन्नसुप्तसीमन्तिनीरत्नताटङ्कमुद्राङ्कितबाहुदण्डः प्रचण्डप्रतिपक्षलक्ष्मीकेशपाशकुसुममाला-

---

सारिष्टैरपि मरणसूचकयोगविशेषसहितैरपि चिरजीविभिः। पक्षे। सारिष्टैः फेनिलवृक्षसहितैः। अरिष्टः फेनिलः समावित्यमरः।

अदितिजठरमिव देवमातुरुदरवदनेकं देवकुलं देवसमूहस्तेनाध्यासितम्। पक्षे। देवकुलं देवगृहम्।

सुरालयैर्मद्यगृहैरपि पवित्रमिति विरोधः। सुरालयैर्देवगृहैरित्यविरोधः।

भोगिभिः सर्पैरपि निरुपद्रवमिति विरोधः। भोगिभिः सुखिभिरिति परिहारः।

यत्र कुसुमपुरनामनगरे शृङ्गारशेखरो नाम राजा प्रतिवसतीति सम्बन्धः। सुरतेति स्पष्टम्। प्रचण्ड इति स्पष्टम्। अनेन कचग्रहणपूर्वकमरिलक्ष्मीः स्वायत्तीकृतेति ध्वनितम्।

प्रशस्तकेदार इव विपुलक्षेत्रमिव बहुधान्यकार्यसम्पादकः।

---

१ -लाधिष्ठितं D -देवताश्रितं F २ निरुपद्रुतम् A B C F G H निरुपद्रवितम् D ३ तत्र C D ४ सुरतभरपरिश्रमसु- E G सु० -सुप्तवधीर- D F.

मोदसुरभितकरकमलः[1] प्रशस्तकेदार इव [2]बहुधान्यकार्य-सम्पादकः शृङ्गारशेखरो नाम राजा प्रतिवसति।

यो बलभित् पावको धर्मराण् निर्ऋतिः प्रचेताः सदागति-र्धनदः शङ्कर इत्यष्टमूर्तिरप्यनष्टमूर्तिः पार्थ इव सुभद्रोपेतः सभीमसेनश्च कृष्ण इव सत्यभामोपेतः सबलश्च।

---

पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रमित्यमरः। पक्षे। बहुधा बहु-प्रकारेणान्यकार्यसम्पादकः।

यः शृङ्गारशेखरो बलभित्शत्रुबलभेत्ता। पावकः पवित्र-कर्ता। धर्मेण राजते धर्मराट्। निर्गतार्तिः स्पर्धा यस्य।

ऋतिर्गतौ घृणायां च स्पर्धायां च शुभेऽपि च।

इति रभसः। प्रकृष्टं चेतो यस्य प्रचेताः। सतामा साकल्येन गतिर्निर्वाहो यस्मात्। धनदो धनदाता। शङ्करः कल्याणकारी। पक्षे। बलभिदिन्द्रः। पावको वह्निः। धर्मराड् यमः। निर्ऋती राक्षसः। प्रचेता वरुणः। सदागतिर्वायुः। धनदः कुबेरः। शङ्करः शिवः। इत्यष्टमूर्तिरष्टगुणविशिष्टा मूर्तिरस्येत्यष्टमूर्ति-रप्यनष्टमूर्तिः। नाष्टा मूर्तयोऽस्येत्यनष्टमूर्तिरिति विरोधः। अनष्टा मूर्तिरस्येत्यनष्टमूर्तिरिति परिहारः।

पार्थ इवार्जुन इव सुभद्रयोपेतः। भीमसेनेन सहितः स-भीमसेनः। पक्षे। शोभनभद्रेण कल्याणेन युतः। भीमया सेनया सहितः।

---

१ -करतलः E २ बहुधान्यार्थ F.

सुराणां[1] पातासौ स पुनरतिपुण्यैकहृदयो[2]
ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः ।
करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां
स सर्वस्वं दाता तृणमिव सुरेशं विजयते ॥

---

कृष्ण इव सत्यभामयोपेतः । सबलः सबलभद्रः । पक्षे । सत्यं च भा च दीप्तिश्च मा च लक्ष्मीश्च ताभिर्युतः । सबलः ससैन्यः ।

सुराणामिति । असाविन्द्रः सुराणां देवानां पाता रक्षकः । मद्यप इत्यपि श्लेषमहिम्नार्थः । स शृङ्गारशेखरः पुनरतिपुण्यं पवित्रमेकं हृदयं यस्येत्युत्कर्ष इन्द्रात् । तस्येन्द्रस्यास्थाने सभायां गुरुर्बृहस्पतिर्ग्रहो ग्रहेषु पठितः । तस्येन्द्रस्यास्थाने गुरुर्महान् ग्रहो निर्बन्ध इत्यर्थश्च । निर्बन्धोपरागार्कादयो ग्रहा इत्यमरः ।

स राजोचितमार्गे निरतः सक्तः । तस्येन्द्रस्य करो हस्तः शतकोटिप्रणयितां वज्रप्रणयितां वहति ।

शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ।

इत्यमरः । शतकोटिसङ्ख्याकद्रव्यप्रणयिता साभिलाषतेति याचकरूपोऽर्थश्च ।

स राजा सर्वस्वं दाता । न लोकेति निषेधात् कर्मणि षष्ठी न । सुरेशमिन्द्रं तृणमिव विजयते । विपराभ्यां जेरि-

---

१ -मूर्तिः । सुराणां A. B C D E F H इति जग० च नर० च । २ -कमि-लयो G इति जग० च ।

जीवाकृष्टिं स चक्रे मृधभुवि धनुषः शत्रुरासीद्गतासु-
र्लक्षाप्तिर्मार्गणानामभवदरिकुले [1]नभ्रमस्तेन लब्धम्।
मुक्ता तेन क्षमेति [2]त्वरितमरिकुलैरुत्तमाङ्गैः प्रतिष्ठा
पञ्चत्वं द्वेषिसैन्ये स्थितमवनिपतिर्नाप सङ्ख्यान्तरं सः ॥

---

त्यात्मनेपदम्। विरोधाभासोऽलङ्कारः। शिखरिणी छन्दः।
रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी।

जीवेति। स शृङ्गारशेखरो मृधभुवि धनुषो जीवायाः प्रत्यञ्चाया आकृष्टिमाकर्षणं चक्रे। शत्रुर्गतासुरासीत्। धनुषो जीवाकृष्टिः शत्रोर्मरणमित्यसङ्गत्यलङ्कारः। चपलातिशयोक्तिश्च।

मौर्वी जीवा गुणो गव्या शिञ्जा बाणासनं गुणे।

इति हैमः। अरिकुले मार्गणानां लक्षाप्तिरभवत्। तेन राज्ञा तेषामरीणां यशो लब्धम्। तेन राज्ञा क्षमा क्षान्तिर्मुक्तेत्यरिकुलैस्त्वरितमुत्तमाङ्गैः प्रतिष्ठा मुक्ता। द्वेषिसैन्येऽरिकुले पञ्चत्वं मृत्युः स्थितम्। स्यात् पञ्चता कालधर्म इत्यमरः। स राजा सङ्ख्यान्तरं युद्धान्तरं न प्राप। एकस्मिन्नेव युद्धे रिपूणां नाशादिति भावः। मृधमास्कन्दनं सङ्ख्यमित्यमरः। सङ्ख्यं संख्यं संख्यं चेति च। श्लेषोऽप्यत्र। स्रग्धरा छन्दः।

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।

---

१ नभ्र- A २ इति कम० च। त्वरितरिपुमखै- A B त्वरितमरिमखै- C D E F G इति कर० च।

यत्र च राजनि राजनीतिचतुरे [1]चतुरुदधिमेखलाया[2] भुवो नायके शासति वसुमतीं पितृकार्ये[3] वृषोत्सर्गः शशिनः कन्यातुलारोहणं[4] योगे[5] शूलव्याघातचिन्ता दानच्छेदः करिकपोलेषु दक्षिणवामकरणं [6]दिङ्निश्चये शरभेदो दधिषु

---

यत्र यस्मिन् चतुरुदधिमेखलाया भुवो नायके राजनीतिचतुरे राजनि वसुमतीं पृथिवीं शासति सति ।

परिसंख्येयम्। पितृकार्ये वृषस्य नीलस्यान्यस्य वोद्वाहपूर्वकस्त्यागः। वृषो धर्मस्य। एवकारः सर्वत्र योज्यः। यद्यपि पदार्थान्तरेणापि परिसंख्योपपद्यते तथापि समन्ततिकस्यैव क्षतिरिति ध्वनयितुममङ्गलस्य पितृकार्यस्य वर्णनमिति भावः।

शशिन एव कन्यातुला चराशिस्तस्यामारोहणम्। तुलारोहणयोग्यस्यान्यस्यापराधिनोऽभवादिति भावः।

योगे विष्कम्भादियोग एव शूलव्याघातौ योगविशेषौ तयोश्चिन्ता न तु शूलेन व्याघातस्ताडनं तस्य चिन्ता ।

करिकपोल एव दानस्य मदस्य विच्छेदो न तु वितरणस्य विच्छेदः।

दिङ्निश्चय एव दक्षिणवामकरणम्। अस्मादयं दक्षिणोऽस्मादयं वाम इति। दक्षिणवामौ हस्तौ पादौ कर्णौ वा। तयोः करणं छेदनम्। कृञ् हिंसायाम्। बाहुलकाद्भावे ल्युट्।

---

१ चतुरम्बुधि- A B २ -मालामेखलाया C ३ पितृकर्मोदये A पितृकार्योदये B पितृकार्येषु D H ४ -तुलाधिरोहो C D इति क्रम० च। ५ योगेषु C D F G H ६ दिग्मोहेषु A B F दिङ्निश्चयेषु C D E G H.

शृङ्खलाबन्धो वर्णग्रथनासूत्प्रेक्षाक्षेपः काव्यालङ्कारेषु लक्ष-दानच्युतिः सायकानां क्रिपां सर्वविनाशः कोशसङ्कोचः कम-लाकरेषु जातिहीनता दुष्कुलेषु न पुष्पमालासु शृङ्गारहानि-

---

दधिष्वेव शरभेदः शरस्य दध्यग्रभागस्य भेदो नाशो न तु शरैर्बाणैर्भेदः।

वर्णग्रथनास्वेव काव्यप्रसिद्धबन्धविशेषेष्वेव शृङ्खलाबन्धनं न तु शृङ्खलायाः पादबन्धेन बन्धः।

काव्यालङ्कारेष्वेवोत्प्रेक्षाक्षेपः। उत्प्रेक्षाक्षेपावलङ्कारौ तद्युक्तः शब्दो लक्ष्यत इत्येकवचनोपपत्तिः। उत्प्रेक्षानवधानं तयाक्षेपो निन्दाऽतोऽन्यच नास्ति।

उत्प्रेक्षानवधानेऽपि काव्यालङ्करणेऽपिच।

इति विश्वः।

अवर्णाक्षेपनिर्वादपरीवादापवादवत्।

इत्यमरः।

सायकानामेव लक्षस्य दानं खण्डनं तस्य च्युतिर्न तु लक्ष-दानस्य वितरणस्य च्युतिः।

क्षिपामेव सर्वविनाशः सर्वनाशो व्यस्त्यभिप्रायेण बहुवचनम्। न तु सर्वेषां वीनां पक्षिणां नाशः।

कमलाकरेष्वेव कोशस्य कुड्मलस्य सङ्कोचो न तु कोशस्य सङ्गृहीतधनस्य सङ्कोचः।

दुष्कुलेष्वेव जात्या सामान्येन हीनता न पुष्पमालासु।

अरत्करिषु न जनेषु दुर्वर्णयोगः कटकादिषु[१] न कामिनी-कान्तिषु[२] गान्धारविच्छेदो रागेषु न पौरवनितासु स्वर्माभावो नीचसेवकेषु न परिजनेषु[३] मलिनाम्बरत्वं निशासु न जनेषु

तत्र जातीनां तत्कुसुमानां सत्त्वात्। जातिर्जातं च सामान्यमित्यमरः।

अरत्करिष्वेव शृङ्गारहानिर्मण्डनहानिर्न तु जनेषु शृङ्गारस्य रसस्य हानिः।

रसे गात्रे च शृङ्गारः करिमण्डन एव च।

इति विश्वः।

कटकादिष्वेवाभरणेष्वेव दुर्वर्णस्य रजतस्य योगो न तु कामिनीकान्तिषु कुत्सितवर्ण योगः। दुर्वर्णं रजतं रूप्यमित्यमरः।

रागेष्वेव गान्धारस्य स्वरस्य विच्छेदो न तु पौरवनितासु गान्धारं सिन्दूरं तस्य छेदः। एतेन न काप्येतद्राज्ये विधवेति ध्वनितम्। निषादर्षभगान्धारेत्यमरः।

गान्धारं रक्तचूर्णं च सिन्दूरं रक्तवालुकम्।

इति हारावली।

नीचसेवकेष्वेव स्वर्मस्य परम्पराप्रुष्टेरभावो न तु परिजनेषु स्वर्मस्य वस्त्रभेदस्य पौरुषस्य वाभावः।

स्वर्मः परम्पराप्रुष्टौ वस्त्रभेदेऽपि पौरुषे।

इति धरणिः।

---

१ कण्ठिकासु F H  २ कामिनीषु D F सीमन्तिनीषु H  ३ इति अम० च मर० च। परिधानेष A B C D E G H.

चलरागता गीतेषु न विदग्धेषु वृषहानिर्निधुवनलीलासु न पौरेषु भङ्गुरत्वं रागविकृतिषु न [1]चित्तेष्वनङ्गता कामदेवे न परिजने मारागमो यौवनोदयेषु न प्रकृतिषु द्विजाघातः सुरतेषु न प्रजासु रशनाबन्धो[2] रतिकलहेषु[3] न दानानुमति-

---

निशास्वेव मलिनाम्बरत्वं न जनेषु। अम्बरं वस्त्रमाकाशश्च।

गीतेष्वेव गानेष्वेव चलरागता न विदग्धेषु। रागो मालवादिरनुरागश्च।

निधुवनलीलास्वेव वृषस्य शुक्रस्य हानिर्न पौरेषु वृषस्य धर्मस्य हानिः।

शुक्राम्बुधर्मशुक्रेषु स्मृतोऽसौ वृषभे वृषः।

इत्युत्पलिनी।

रागविकृतिष्वेव भङ्गुरत्वं न चित्तेषु भङ्गुरत्वं कुटिलत्वम्।

कामदेव एवानङ्गताशरीरत्वं न परिजनेऽनङ्गतासम्बन्धिता।

यौवनोदय एव मारस्य कामस्योदयो न परिजने मारस्य मारणस्योदयः। मृङ् प्राणत्यागे। भावे घञ्।

सुरतेष्वेव द्विजैर्दन्तैराघातो न तु प्रकृतिषु राज्याङ्गेषु प्रजासु च द्विजानां ब्राह्मणानां पक्षिणां वा घातः।

रतिकलहेष्वेव रशनायाः काञ्च्या बन्धनं न दानानुमतिषु रसनाया जिह्वाया बन्धो जडता।

---

१ जनचरितेषु A B G चरितेषु C F प्रकृतिषु H इति जन॰ च नर॰ च।
२ -भङ्गो C ३ रतिकेलिषु F.

ष्वधररागिता तरुणीषु[१] न परिजनेषु कर्तनमलकेषु न पुरन्ध्रीषु निस्त्रिंशत्वमसीनां न पुरुषाणां करवालनाम्नो योधानां परं व्यवस्थितः।

[२]यस्य च महिषी दिग्गजकपोलमदलेखेवानन्दितालिगणा[३]

---

स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा।

रसज्ञा रसना जिह्वेत्युभयत्रामरः।

तरुणीष्वेवाधरस्याधरोष्ठस्य रागिता न परिजनेष्वधरे नीचेऽनुरागिता।

अलकेष्वेव कर्तनं छेदनं न पुरन्ध्रीषु स्त्रीषु सूत्रोत्पादनम्। दाराः स्यात् तु कुटुम्बिनी। पुरन्ध्रीत्यमरः।

कर्तनं च द्वयोश्छेदे नारीणां सूत्रनिर्मितौ।

इति विश्वः।

असीनामेव खड्गानामेव निस्त्रिंशत्वम्। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशस्तत्त्वम्। सङ्ख्यायास्तत्पुरुषस्य वाच्य इति डच्। न पुरुषाणां निस्त्रिंशत्वं क्रूरत्वं निःकृपत्वं वा।

निष्करुणेऽथ निस्त्रिंशः क्रूरे खड्गेऽपिचेष्यते।

इत्युत्तरतन्त्रम्।

योधानामेव परं केवलं करवालेन खड्गेन नाम्नो व्यवस्थितो नान्यत्र करस्य राजभागस्य हस्तस्य वा वालानां शिशूनां केशानां वा नाशः।

---

१ -रागबालबलेषु इति अग० च नर० च। २ तस्य A B C D E F इति नर० च। ३ -माला C -कुला F

पार्वतीव सुकुमारा सर्वान्तःपुरप्रधानभूतानङ्गवती नाम।

तयोश्च मध्यमोपान्ते वयसि वर्तमानयोः कथमपि दैववशात् [1]त्रिभुवनविलोभनीयाकृतिः पुलोमतनयेवानन्दितसहस्रनेत्रा तनया वासवदत्ता नाम बभूव।

अथ सा [2]रावणभुजेवोल्लासितगोत्रा[3] परिणाममुपयात्यपि यौवनभरे परिणयपराङ्मुखी तस्थौ।

---

यस्य शृङ्गारशेखरस्य महिष्यनङ्गवती। नामेति प्रसिद्धा-विशेष्यम्। दिग्गजकपोलमदलेखेवानन्दिता लीनाम्। पक्षे। आलीनां सखीनां गणो यया सा।

पार्वतीव शोभनः कुमारः कार्त्तिकेयो यस्याः। पक्षे। सुकुमारातिमृदुला सर्वेष्वन्तःपुरेषु प्रधानभूता।

प्रधानं क्लीबमेकत्वे प्रधानमुत्तमे पुमान्।

इति मेदिनी।

तयोरनङ्गवतीशृङ्गारशेखरयोः। कथमपि यत्नेन। यत्नस्यापि स्वतोऽप्रभुत्वादाह। दैववशात्। त्रिभुवने विलोभनीयाकृतिरभिलषणीयाकृतिः। अतएव पुलोमतनयेव शचीवानन्दितः सहस्रनेत्र इन्द्रो यया सा। पक्षे। आनन्दितं सहस्राणां नेत्रं यया। वासवदत्ता नाम तनया बभूव।

---

१ इति अग० च। त्रिभुवनलोभनी- A B E F H त्रिभुवनलोकनी- C २ रावणभुजवन इवो- A B C D रावणभुजेव समुल्लसित- H ३ -गोत्रे A B C F ४- विन्ध्याचल इव मदनाधिष्ठिते पारावार इव सञ्जातलावण्ये नन्दनवन इव सदा कल्पतरुणाभिनन्दिते पवन इव सुमनोहारिणि B C

एकदा तु[१] विजृम्भमाणसच्चकारकोरकनिकुरम्बनिपतित-[२]मधुकरमालामदकलझङ्कारजनितपथिकजनसञ्ज्वरः[३] को-[४]मलमलयमारुतोद्धूतचूतप्रसवरसास्वादकषायकण्ठकलकण्ठ-[५]कुहरुतभरितसकलदिङ्मुखो विकचकमलखण्डलीयमान[६]-

---

अथ सा वासवदत्ता रावणभुजेवोल्लासिता गोत्रः पर्वतः। पक्षे। गोत्रं कुलं यथा सा। दोर्दोषा च भुजा भुज इति मेदिनी। परिणाममुपयात्यपि यौवनभरे परिणयपराङ्मुखी तस्थौ।

एकदा वसन्तकाल आजगामेत्यन्वयः। विजृम्भमाण इति। झङ्कारः शब्दविशेषः।

कोमलेति। कषायः सुरभिः कण्ठः स्वरो यस्य। द्रवेऽङ्ग-रागे सुरभौ रसे वर्णे कषाय इति विश्वः। सुरभिः स्यान्मनोज्ञे-ऽपीति रत्नकोशः।

कण्ठो गले सन्निधाने ध्वनौ मदनपादपे।

इति विश्वप्रकाशः। कलकण्ठः कोकिलः। ताम्राक्षः कोकिलः पिकः। कलकण्ठः काकपुष्ट इति हैमः। कुहरुतम्। भरितं पूरितम्।

विकचेति। मरन्दलेति। कोटिरग्रम्। शीकरा बिन्दवः। शीकरोऽम्बुकणाः स्मृता इत्यमरः। समासक्तो मिलितः। अ-र्पितं समर्पणम्।

---

१ यथैकदा तु C अथ कदाचित् D २ मधु॰ -मदकलझङ्कार- A D G
३ -पथिकज्वरः C G H -अनविरतज्वरः D ४ मल॰ -कलकण्ठकुलकु- A B G
५ कुहरितभरि- C E F H ६ + -मद- C G

मत्तकलहंसकुलकोलाहलमुखरितसकलसरोवरः[१] परभृत-
[२]नखकोटिपाटितपाटलिकुड्मलवृन्तविवरविनिर्गतमधुधारा[३]-
[४]सारशीकरकणनिकरसमालब्धदक्षिणसमीरणबाणव्रणितप-
थिकजनवधूहृदयो मधुमदमुदितकामिनीगण्डूषसीधुसेक-
पुलकितबकुलो [५]मदनरसपरवशविलासिनीतुलाकोटिविक-
[६]टचटुलचरणारविन्दमन्दप्रहारप्रहृष्टकङ्केलितरुव्रातः प्रति-
[७]दिशमश्लीलप्रायगीयमानगीतश्रवणोत्सुकखिङ्गजनप्रारब्धच-

---

मधुमदेति। नवाङ्कुरोद्गमेन सपुलक इवाचरित इति भावः। तथाचोक्तम्।

पादाहतः प्रमदया विकसत्यशोकः
शोकं जहाति बकुलो मुखसीधुसिक्तः।

इति। तुलाकोटिर्मञ्जीरं तेन विकटं विरचितं चटुलं चञ्चलं च चरणारविन्दम्।

प्रतिदिशमिति। वीप्सायामव्ययीभावः। शरदादित्वाट्टच्। अश्लीलप्रायं ग्राम्यप्रायम्। चर्चरी चाचर इति भाषायां प्रसिद्धम्।

दुर्जन इव सतां साधूनामरसोऽप्रीतिजनकः। पक्षे। तामरसेन कमलेन सहितः सतामरसः। पङ्केरुहं तामरसमित्यमरः।

---

१ -कमलसरोवरः C E F H २ नखकोटिविघटितपा- A B नखकोटिपाटलि- D नख॰ -पाटल- C H नख॰ -कुड्मलविव- C D E H ३ -मधुरमधुधारा E ४ सा॰ -समालम्बनदक्षिण- F सा॰ -बाणव्रातव्रण- H ५ मदनशरपर- D ६ टच॰ -हारमुकुलितकङ्के- D ७ दि॰ -त्सुकषिङ्गजन- D

[1]चंचरीगीताकर्णनमुह्यमानानेकपथिकव्रतो दुर्जन इव सतामरसो दुष्कुल इव जातिहीनो रावण इवापीतलोहितपलाशाशनसेवितो महाभृङ्गारीव सुगन्धवहः सुराजेव सम्हद्धकु-

दुष्कुल इव जातिः सामान्यं तेन हीनः। जातिर्जातं च सामान्यमित्यमरः। पक्षे। जातिर्मालती। सुमना मालती जातिरित्यमरः।

रावण इवापीतं लोहितं रुधिरं यैस्तादृशैः पलाशाशनै रक्षसां व्रतैः सेवितः।

रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्।

इत्यमरः।

हरिद्वर्णो राक्षसश्च पलाशश्छदनः स्मृतः।

इति हैमः। पक्षे। आपीतैरीषत्पीतवर्णैर्लोहितै रक्तैः पलाशव्रतैः पलाशवृक्षव्रतैः सेवितः। रोहितो लोहितो रक्त इत्यमरः।

भृङ्गारीव सुगन्धं सुगन्धद्रव्यं वहति तादृशः। पक्षे। शोभनो गन्धवहो वायुर्यस्मिन् सः।

पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः।

इत्यमरः। सुराजेव। न पूजनादिति निषेधान्न टच्।

सम्हद्धः कुवलयो भूवलयो यस्मात्। पक्षे। सम्हद्धानि कुवलयानि यस्मिन्।

१ चंचरीसमाकर्ण- E G

बधयो वास्तविक इव विवर्धितसुखाशः सल्लकिकाव्यबन्ध [1]इवाबद्धतुहिनः सत्पुरुष इव दोषानुबन्धरहितः कैवर्त [2]इवाबद्धराजीवोत्पलशालः सन्ध्याकालारम्भशकुनिसार्थ इव निन्दित-

---

वास्तविक इव तात्त्विकपदार्थ इव विवर्धिता सुखस्याशा येन। पक्षे। विशेषेण शरदपेक्षया वर्धितः सुखाशो राजतिमिषः। केचित् तु वास्तविको वाटिकापाल इत्याहुः।

सुखाशो राजतिमिषः शोभनाशाप्रचेतसोः।

इति विश्वः।

सल्लकिकाव्यबन्ध इवाबद्धान्यप्रयुक्तानि तु हि नाव्ययानि यत्र। पक्षे। तुहिनं हिमम्।

सत्पुरुष इव दोषस्यानुबन्धेन रहितः। पक्षे। दोषा रात्रिस्तदनुबन्धेन रहितः। रात्रिह्रासारम्भकत्वात् मदपक्षपातितेति भावः। मीने मेषे वसन्तः स्यात्। मीनराशिस्थसूर्यस्य नवांशोत्तरं दिनमानम्।३०।२। रात्रिमानम्।२९।५७। इति प्रसिद्धं ज्योतिषे।

कैवर्त इव दाश इवाबद्धा राजीवोत्पलशाला मत्स्यभेदा येन सः।

राजीवाख्या मृगे मत्स्ये पद्मे राजोपजीविनि।

इति विश्वप्रकाशः। कैवर्ते दाशधीवरौ।

रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः।

---

१ इवानाबद्ध- D २ इव बद्ध- B C

मरुबकः शक्र इवेन्द्राणीरुचिर्महावीर[1] इवाधरीकृतदमनकः खिङ्ग इवाम्लानसुभगो वसन्तकाल आजगाम।

---

इति द्वयोरमरः। पक्षे। राजीवं पद्ममुत्पलं कुवलयं शाला वृक्षाः। स्यादुत्पलं कुवलयमित्यमरः।

शालः पादपमात्रे स्यात् प्राकारे शक्रुकद्रुमे।

इति विश्वप्रकाशः।

समदुकासारस्थलमन्वेषी शकुनिसार्थः पक्षिसमूहः। समीरणो मरुबकः। कासारः सरसी सरः। शकुन्तिपक्षिशकुनि- इति त्रिष्वमरः। मरुआ इति लोके। यद्वा मरुबकः पिण्डीतकः।

पिण्डीतको मरुबकः श्वसनः करहाटकः।

इत्यमरः। मैनफल इति लोके। पक्षे। मरुबको मरुदेशस्थो बकः।

शक्र इवेन्द्राणी शची तस्यां रुचिरभिलाषो यस्य। पक्षे। इन्द्राणी निर्गुण्डी।

सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि।

इत्यमरः। मेउडी इति ख्याता लोके। वसन्तप्रकरण एव दमनकस्योपवर्णनान्महावीर इवेति प्रक्षिप्तः पाठः।

खिङ्ग इव विट इवाम्लानसुभगः। पक्षे। अम्लानैर्महासहाभिः सुभगः। अम्लानस्तु महासहेत्यमरः। कठसरैया इति ख्याता।

---

१ -वधिरतरो महावीर A B -वधितो महावीर C F H

अतिदूरप्रवृद्धेन मधुना जगति को वा[१] न विक्रियते यद्-तिमुक्तको मुनिरपि विचकास[२]। कुसुमशरस्य [३]नवचूतप्रसवशरमूलनिलीना मधुकराली यन्त्रणेव[४] रेजे[५]। वृन्तविनिर्गतवि-[६]चकिलकलिकातले[७] मञ्जु[८] गुञ्जन् मधुकरो मकरकेतोस्त्रि-

---

अतिदूरप्रवृद्धेन मधुना वसन्तेन मद्येन वा जगति को न विक्रियते। कर्मणि लट्। अतिमुक्तको मुनिरपीति स्पष्टम्। पक्षे। अतिमुक्तकः पुण्ड्रको मुनिरगस्त्यो विचकास।

उत्प्रेक्षयाह। कुसुमशरेति।

शराणां पञ्चरचना यन्त्रणा परिकीर्तिता।

इति हारावली।

यन्त्रणं स्यान्नियमने बन्धने रक्षणेऽपि च।

इति विश्वप्रकाशः। शेषं स्पष्टम्।

वृन्तेति। वृन्तात् प्रसवबन्धनाद्विनिर्गतानां विचकिलानां मल्लिभेदानां कलिकास्तासां तले मञ्जु गुञ्जन् मधुकरो मधुव्रतो मकरकेतोस्त्रिभुवनविजयप्रयाणशङ्खध्वनिमिवाकरोत्।

स्यातो विचकिलो मल्लीप्रभेदे मदनेऽपि च।

इति विश्वप्रकाशः।

---

१ मास D E २ -काशे B H -कार D ३ नवचूतशर- D E F नवचूतशरे लीना H ४ पत्रणेव A D E F G इति नर० च। पञ्चपञ्चरचनलेखेव C ५ रराज D ६ -कचविचकि- C E H ७ -किलविवरगु- C -कोमलविचकिलकलिकाञ्चले D ८ — मञ्जु A B C D F H

[1]भुवनविजयप्रयाणशङ्खध्वनिमिव चकार। नवयावकपङ्कपल्लवितसनूपुरतरुणीचरणप्रहारानुरागवशान्नवकिसलयच्छलेन तमिव[2] रागमुदवहदशोकः। [3]मधुरमधुपरिपूरितकामिनी[4]मुखकमलगण्डूषसेकादिव[5] [6]तद्रसमात्मकुसुमेषु बिभ्रद्बकुलतरू रराज। अन्तरान्तरा निपतितमधुकरनिकरकिर्मीरितः[7] कङ्केलिगुच्छोऽर्धनिर्वाणमनोभवचिताचक्रानुकारी पथिकजनहृदयदाहमुवाह। विकचविचकिलराजिरलिकुलशव-

---

अशोको नवयावकपङ्केन नवलाक्षारसेन पल्लवितं रक्तं सनूपुरं समञ्जीरं तरुणीचरणं तस्य प्रहारस्तदनुरागवशान्नवकिसलयच्छलेन तं रागमिवोदवहत्।

भवेत् पल्लवितं लाक्षारक्ते सप्रसवे तते।

इति विश्वप्रकाशः।

बकुलतरुर्मधुना मद्येन परिपूरितं यत् कामिनीमुखकमलं तस्य गण्डूषसेकात् तद्रसमात्मकुसुमेषु बिभ्रदिव रराज। तरू रराजेत्यत्र रो रीति लोपे ढ्लोप इति दीर्घः।

अन्तरा निपतितो मधुकरैः किर्मीरितश्चित्रः कङ्केलिगुच्छोऽशोकगुच्छोऽर्धनिर्वाणमर्धोपशान्तं यन्मनोभवचिताचक्रं तदनु-

---

१ भुवनविजयशङ्ख- A B C D F H  २ तमेव B C D G H  ३ मधुरमधुपू- A B C D F G H  ४ मुखकमलरस- A D F G H  ५ -षसङ्गानुरागादिव A D F H -वसङ्गादिव B C -षसेकानुरागादिव G  ६ तत्समागमन्यमात्म- A B C F G  ७ -किर्मीरः A B C D E F G H इति अग० च नर० च।

T

[1]लेन्द्रनीलमणिमयी मुक्तावलीव मधुश्रियो रुरुचे। विरहिणां[2] हृदयमथनाय कुसुमशरस्य [3]चक्रमिव नागकेसरकुसुमम- शोभत। पथिकजनहृदयमत्स्यं ग्रहीतुं मकरकेतोः पलाव इव पाटलिपुष्पमदृश्यत[4]। कन्दर्पकेलिसम्पल्लम्पटलाटील-

---

कारी विरहिणां हृदयदाहं मनस्तापमुद्वाह। वह प्रापणे। निर्वाणमस्तङ्गमनमिति विश्वः।

अलिकुलशबला विकचविचकिलराजिर्मधुश्रिय इन्द्रनील-मणिमयी मुक्तावलीव रुरुचे।

विरहिणामिति स्पष्टम्।

पथिकजनहृदयमत्स्यं ग्रहीतुं कुसुमकेतोः पलाव इव पलेन मांसेनावति मत्स्यानां तृप्तिं जनयति हन्ति वा पलावो बडिशं तद्वत् पाटलिपुष्पमदृश्यत। सदारैरिति शेषः। पाटलिः पा-टला मोघेत्यमरः। पाडला इति लोके।

वायोः शृङ्गारितां पुरस्कृत्य तत्सदृशाङ्गनाभिः सह सम्भो-गमनुप्रासेनाह। मलयानिलो ववाविति सम्बन्धः। कन्दर्पके-लिसम्पत् कामक्रीडासम्पत्तिस्तस्यां लम्पटाः सक्ता लाट्यो लाट-देशस्त्रियस्तासां ललाटतटः। धम्मिल्लः संयताः केशास्तयोर्मल-नेन मिलितः परिमलो जनमनोहरो गन्धस्तेन समृद्धमधुरि-मगुणः। धम्मिल्लः संयताः कचा इत्यमरः।

---

१ ला अलिनेन्द्र- C २ -णोहृद- A B F ३ तन्नाटचक्र- A B इति नर० च। ४ -समशोभत D

[१]लाटतटधम्मिल्लमल्लनमिलितपरिमलसम्बद्धमधुरिमगुणः का-
[२]मकलाकलापकुशलचारुकर्णाटसुन्दरीस्तनकलशघुसृणधू-[३]
लिपरिमलामोदवाही [४]करणरसिककान्तकुन्तलीकुन्तलोल्ला-
सनसङ्क्रान्तपरिमलमिलितालिमालामधुरतरझङ्काररवमुखरि-
तनभस्तलो नवयौवनरागतरलकेरलीकपोलपालिपत्रावली-

---

कामकलाकलापकुशलाः प्रवीणा याः कर्णाटसुन्दर्यस्तद्देशाङ्गनास्तासां स्तनकलशेषु घुसृणं कुङ्कुमं तद्धूलिपरिमलस्तदामोदोऽतिनिर्हारी गन्धस्तद्वाही । स्तनस्पर्शो ध्वनितश्च ।

कुङ्कुमं पीतकावेरं घुसृणं कुसुमात्मकम् ।

इति हारावली । आमोदः सोऽतिनिर्हारीत्यमरः ।

करणेषु गीताङ्गहारसंवेशक्रियादिषु रसिकाः कान्ताः कुन्तल्यः कुन्तलदेशाङ्गनास्तासां कुन्तलानां केशानामुल्लासनेन सङ्क्रान्तपरिमलस्तेन मिलितालिमाला भ्रमरपङ्क्तयस्तासां मधुरतरझङ्कारै रवैर्मुखरितनभस्तलः । अनेन कचग्रहणं भणितं च ध्वनितम् ।

करणं साधने चैव कायकायस्थकर्मसु ।
गीताङ्गहारसंवेशक्रियाभेदेन्द्रियेषु च ।
बाह्यवादे च करणः स्मृतः शूद्राविशोः सुते ।

---

१ लाटविकटधम्मिल्ल- A B लाडतडविकटधम्मिल्लमालामि- C लाटतटविकटधम्मिल्लभारसम्पर्कमल्लिकामि- D २ मकलाकलापचार- A B C D F H स॰ -सुन्दरीसुन्दरस्तन- A B D E F G H ३ -मसृणधू- C -मसृणघुसृणधू- D ४ करचरणककरणरसिक- C

परिचयचतुरस्तु:षष्टिकलाकलापविदग्धमुग्धमालववनित-[1]म्बिनीनितम्बबिम्बसंवाहनकुशलः [2]सुरतश्रमपरवशान्ध्रीनीर-[3]न्ध्रपीनपयोधरभारनिदाघजलकणनिकरशिशिरितो मलयानिलो[4] ववौ[5]।

अत्रान्तरे वासवदत्तासखीजनाद्विदिताभिप्रायः[6] शृङ्गारशेखरः [7]स्वसुतायाः स्वयंवरार्थमशेषधरणितलभाजां[8] [9]राज्ञामेकत्र [10]सङ्गममकरोत्।

ततो [11]दग्धकृष्णागुरुपरिमलामोदमोदितमधुव्रतव्रात-

---

इति विश्वप्रकाशः

नवयौवनरागतरलकेरलीनामित्यादि। कर्पासपालिपत्रावलीपरिचये सम्बन्धे चतुरः। अत्र परिचयेन निर्माणमपि ध्वनितम्। नितम्बसंवाहनं तत्स्पर्शोऽपि। स्पष्टम्।

अत्रान्तरे वासवदत्तायाः सखीजनाद्विदिताभिप्रायः शृङ्गारशेखरः स्वसुताया वासवदत्तायाः स्वयंवरार्थं समस्तनृपतीनां सङ्गममरोत्।

ततो भूभुजां सम्मेलनोत्तरं वासवदत्ता मञ्चमारुरोहेत्य-

---

१ -मालवीनितम्ब- C E F H -मागधीनितम्ब- D २ सु० -वशान्ध्रपुरन्ध्री- C F ३ स्त्र० -शिशिरितमलय- A B C D F H ४ -मारुतो A B G H ५ ववार D इति वर० च। ६ -मावेदिताभिप्रायः C H ७ सुतायाः A B G स्वसुतास्वयं- C D ८ -धरणिभाजां A B F H ९ भूभुजामेकत्र D E H १० सङ्गति- A B G सङ्गत- D F संगति- H ११ द० -मलयामोदितमधु- D H द० -मधुकरमालाप- A B G द० -मधुव्रतमालाप- C D H द० -मधुव्रतव्रातप- F

[१]बल्लगुमगुमायितमुखरितमतिरभसहासच्छटादोधितिधव-
[२]लिमपरिमिलितमनेकपरिहासकथाकलापविदग्धशृङ्गारि-

चयः। दग्धः कृष्णागुरुः कालागुरुस्तद्गामोदमोहितमधुव्रतव्रातानां बल्लगुमगुमायितेन प्रचुराव्यक्तशब्देन मुखरितम्।

अतिरभसेति। चेटीनामित्यादिरस्य। अनेकेषां भूपतीनां परिहासः कुलवयोरूपगुणहीनत्वेन परिहासः। कथाकलापः योग्यानां वंशादिवर्णनसमुदायस्तत्र विदग्धश्चतुरस्तज्ज्ञो यः शृङ्गारिजनो लोको नायिकानायकरसभावाभिज्ञः सखीरूपस्तेन समाकुलं व्याप्तम्।

जनो लोके महर्लोकात् परलोके च पामरे।

इति विश्वप्रकाशः

कपोलाचिह्नतोल्लासो भिन्नोष्ठः स महात्मनाम्।
विदीर्णास्यस्य मध्यानामधमानां सशब्दकः॥

सो हास इति वाग्भट्टालङ्कारः। तथाच कालिदासः। ततो नृपाणां श्रुतवृत्तवंशेति। यद्वा। अनेकपरिहासकथाकलापे द्वयोः परस्परानुरागानन्तरमनेकपरिहासकथाकलापे विदग्धः। शेषं पूर्ववत्। तथाच कालिदासः।

तथागतायां परिहासपूर्वं सख्यां सखी वेत्रधरा बभाषे।
आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श॥

१ बल्लगुञ्जुमा- A D H बल्लगुमगुमा- C E G H बल्लघुमघुमा- F २ लितपरि- C F लि० -कथालापवि- A B C D F H लि० -कथाकलावि- G लि० -शृङ्गारमयजन- A B C D F H

जनसमाकुलं दह्यमानसुगन्धिसारभाकृष्टपुरोपवनषट्पदकुलसमाकुलमर्जुनसमरमिव नन्दिघोषमुखरितदिगन्तरं[1] मञ्चमारुरोह वासवदत्ता।

तत्र[2] च[3] केचित् कलाङ्कुरा इव विजितनगरमण्डना

---

इति।

दह्यमानेति पूर्वविशेषणेन गतार्थम्।

अर्जुनसमरमिव नन्दिघोषेण तदभिधानेन रथेन मुखरितदिगन्तरम्। तदुक्तम्।

गाण्डीवं धनुरेतस्य हनूमान् ध्वजभूषणम्।
नन्दिघोषो रथस्तस्य गतिस्तस्य न भूतले॥

इति। पक्षे। नन्दिरानन्दनो घोषस्तूर्यादिशब्दस्तेन मुखरितदिगन्तरम्।

नन्दिरानन्दने प्रोक्तः प्रतीहारे हरस्य च।

इति विश्वप्रकाशः। यद्वा नन्दिर्जामातृसुहृज्जन इत्यर्थः। तेषां घोषेणेति पूर्ववत्।

नन्दिरानन्दजामातृमित्रयोरपिचेष्यते।

इत्युत्तरतन्त्रम्।

तत्र तेषु केचित् कलाङ्कुरा इव मूलदेवा इव विजितनगरमण्डना विजिततदभिधानवेश्याः कलाङ्कुरेण कामशास्त्रकलाभिज्ञतया नगरमण्डना वेश्या जितेति वार्ता।

---

१ -गन्तं C -खरदिङ्मुखं D २ यत्र A B C D F G H ३ — च D E F G H

अपरे पाण्डवा इव [१]दिव्यचक्षुःकृष्णागुरुपरिमिलिता अन्ये शरद्दिवसा इव [२]सुदूरप्रवृद्धसुखाशा[३] इतरे व्याहन्तुमुद्यता

---

कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः।

इति हारावली। विजितं नगरस्य मण्डनं भूषणं येस्ते। सर्वोत्कृष्टभूषणधारणादिति भावः। पक्षे। विना गरुडेन जितं नगरं बाणपुरं तस्य मण्डना बाणासुरतुल्या राक्षसा इवेत्युपमासोऽपि।

अपरे पाण्डवा इव दिव्यचक्षुः कृष्णः कृष्णा द्रौपदी गुरवो द्रोणादयो द्रौपदीगुरवो वा तैर्मिलिताः। पक्षे। दिव्यचक्षुषः सुलोचनाश्च ते कृष्णागुरुपरिमिलिताश्च कालागुरुधूपधूपायितसर्वाङ्गास्ते। पक्षे। दिव्यचक्षुषोऽन्धाः कृष्णाः श्यामवर्णा अगुरुपरिमिलिता वृद्धरक्षणरहिता इत्युपहासः।

दिव्यचक्षुः सुनयने कृष्णोन्धे सिंहकेऽपि च।

इति धरणिः। विदुः परिमलं गन्धे रक्षणेऽपि चेति विश्वः।

अन्ये शरद्दिवसा इव सुदूरं प्रवृद्धाः सुखाशा रात्रितमिषा येभ्यस्ते। सुखाशानां वसन्ते वृद्धेरिति भावः। पक्षे। सुदूरं प्रवृद्धा सुखस्य वासवदत्तारतिसम्भोत्सवस्याशा येषां ते। पक्षे। सुदूरं प्रवृद्धा सुष्ठु खमिवाकाशमिवाशा येषां ते। ईप्सिता लब्धेर्व्यर्थत्वादिति भाव इत्युपहासः।

अपरे व्याहन्तुं परान् हन्तुमुद्यता इव खबलार्थिनः खसे-

---

१ दिव्यचक्षुषः A B H २ दूर- C D F ३ -सुखाशा A B H

इव स्वबलार्थिनः केचिच्छाधा इव शकुनश्रावकाः केचिद्दाखेटकाः[1] इव रूपानुसारप्रवृत्ताः केचिज्जैमिनिमतानुसारिण इव तथागतमतध्वंसिनः केचित् खञ्जना इव सांवत्सरफलदर्शिनः केचित् सुमेरुपरिसरा इव कार्तस्वरमयाः केचित्

---

न्यार्थिनः। पक्षे। सुष्ठु शोभनावस्था वासवदत्ता तदर्थिनः। स्वस्मै बलं पराक्रमसमर्थयन्ते वैद्यादिभ्यस्स इत्युपहासः।

केचिद्दाखेटा मृगया तदासक्ता रूपस्यानुसरणे प्रवृत्ताः। केचिज्जैमिनिमतानुसारिणो मीमांसानुसारिणस्त इव तथागतानां नास्तिकानां मतध्वंसिनः।

सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः।

इत्यमरः। पक्षे। तथागतानां यथा स्वगेहे स्थितास्तथागतानां न तु सभोचितवस्त्रभूषणधारिणां सौन्दर्याभिमानजुषां मतम्। किमिव हि मधुराणां मण्डनं नाकृतीनामित्येवं रूपं तद्ध्वंसिनस्तन्निन्दकाः। पक्षे। तथागतं कुलपरम्परोचितं मतं शैवादिमतं तद्ध्वंसिनो नाशकाः। आचारहीनताचोपहासबोधम्। तथाच श्रीहर्षः। जनः क्रियाचारमुचं विगायतीति।

केचित् खञ्जना इव सांवत्सरो ज्यौतिषिकस्तद्वत् फलदर्शिनः। यथा ज्यौतिषिको निध्यादिप्रश्ने निधिरूपफलं दर्शयन्ति। एवं खञ्जना अपि सुरतादिना निध्यादिफलं दर्शय-

---

१-डिम C D

[1]विकचकुमुदाकरा इव भास्वद्दर्शननिमीलिताः केचिद्धार्तराष्ट्रा

---

न्तीत्यर्थः। पक्षे। सांवत्सरं फलं वर्षफलं दर्शयन्ति स्त्रीपुत्रादि-लाभार्थं तादृशास्ते। सांवत्सरो ज्यौतिषिक इत्यमरः।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥

इति निश्चयरहितत्वेनाधीरत्वं व्यङ्ग्यमुपहासबीजम्।

केचिन्मेरुपरिसरा इव प्रान्तभूमय इव कार्तस्वरं सुवर्णं तन्मयाः। पक्षे। कार्तस्वरमयाः सुवर्णमयाः। पक्षे। का ईषत्-कार्तस्वरमया वा। रुक्मं कार्तस्वरं जाम्बूनदमित्यमरः। कृपण-तोपहासबीजम्।

केचिद्विकचकुमुदाकरा इव भास्वद्दर्शनेन सूर्यदर्शनेन नि-मीलिताः सङ्कुचिताः। कुमुदानां सङ्कोचस्तदाश्रये। मञ्चाः क्रोशन्तीतिवदुपचारात्। भास्वद्विवस्वत्सप्ताश्व- इत्यमरः। पक्षे। भास्वतोऽतितेजोयुतस्य जनस्य दर्शनेन निमीलिता निमीलि-तनयनाः। वासवदत्तादर्शनादेव येषामयं प्रकारस्तेषामग्रे का गतिरिति स्पष्ट एवोपहासः।

केचिद्धार्तराष्ट्रा इव विश्वरूपस्य कृष्णादर्शितविश्वरूपस्य द-र्शनेन जनितेन्द्रजालप्रत्ययाः। अनेन मायाजालमेव कृतमिति धार्तराष्ट्राभिप्रायः। पक्षे। विश्वस्य जगतो रूपं सौन्दर्यं यस्यां त्रैलोक्यसमवायिसौन्दर्यपरमाणुनिर्मिता वासवदत्ता तस्या

---

१ — दिक्षव- A B C D E F H

इव विश्वरूपावलोकनजनितेन्द्रजालप्रत्ययाः[1] केचिदात्मनि वारणबुद्ध्या बलवन्तोऽपि सुवाहाः केचित् पाणिग्रहणार्थिनो-

---

दर्शनेन जनितेन्द्रजालप्रत्ययाः। तथाच कन्दर्पकेतुवर्णनप्रस्तावे मूलकार एव तस्यैव नैपुण्यस्य सौन्दर्येत्यादि स्पष्टमेव वच्यति। अतो द्वयोरभूतपूर्वं सुरूपयोः संयोजनम्। अतएव स्वप्नदर्शनो-त्तरं कन्दर्पकेतौ साभिलाषा वृथैवेत्यादिनानुरूपभर्तृसक्ता अन्या निन्दयिष्यति। अतस्तस्थलमत्र व्यङ्ग्यम्।

केचिदात्मनि स्वस्मिन् वारणबुद्ध्या गजबुद्ध्या बलवन्तोऽपि सबला अपि सुवाहाः सुखेन वाहो वहनं येषां तादृशाः। वह प्रापणे घञ्। यो ह्यतिबलः पुमान् स न पुरुषान्तरेण सुखोद्वहनीय इति विरोधः। पक्षे। शोभना वाहा अश्वा येषां ते। यद्वा वाहा भुजा येषाम्। वाहो बाह्वतुरङ्गयोरिति शाश्वतः। पक्षे। सुवाहाः शोभनाश्वजातिपुरुषास्ते वृषजाति-पुरुषा इव न यथाकथञ्चिदपि जातिचयणायिकोपयुक्ता इति दिक्। प्रपञ्चस्तु रतिरहस्यादौ द्रष्टव्यः। अत्रोपमासबीजं तत एवावधेयम्।

पाणिग्रहणार्थिनो वासवदत्तापाणिग्रहणार्थिनः। असुकरं दुष्करं मन्यमानाः। स्वेच्छासत्त्वेऽपि स्वयंवराधीनत्वात् तस्य। पक्षे। असुकरमसवः प्राणास्तत्कारकं प्राणप्रदम्।

---

१ -जालप्रत्ययाः A B C F G H -प्रथाः E

ऽप्यसुकरं मन्यमानाः केचिदधरीभूता[1] अपि स्थिराः केचित् पाण्डुपुत्रा इवाज्ञहृदयाज्ञानहृतक्षमाः [2]केचिद्बृहत्कथानुबन्धिनो गुणाढ्याः केचित् तिर्यग्गतयः [3]सुगन्धवाहाः

---

केचिदधरीभूता अप्यपृथ्वीभूता अपि स्थिराः पृथिव्य इति विरोधः। विश्वम्भरा स्थिरा। धरा धरित्रीत्यमरः। पक्षे। अधरीभूता हीनतामापादिता अपि स्थिरा निश्चला इति परिहारः। स्फुटमेवात्रोपहासबीजं निर्लज्जतारूपम्।

केचित् पाण्डुपुत्रा इवाज्ञहृदयस्य प्राज्ञकतत्त्वस्याज्ञानाद्धृतक्षमा हृतभूमयः। पक्षे। अक्षाणां वाग्मदक्षासम्बन्धिनामिन्द्रियाणां हृदयस्य तत्त्वस्य मनसो वाज्ञानेनानवबोधनेन हृतक्षमा गतक्षान्तयः। इयमङ्गीकरिष्यति न वेति व्याकुलीभूता इति भावः। तरलताख्य दोषः।

केचिद्बृहत्कथानुबन्धिनो बृहत्कथाख्यग्रन्थकर्तारो गुणाढ्याभिधानाः कवयः। बहुवचनं पूजार्थम्। पक्षे। बृहत्कथानुबन्धिनो बहुकथावक्तारो गुणाढ्या गुणैः सन्ध्यादिभिरन्यैश्चाढ्याः। पक्षे। गुणैर्वागुरादिभिराढ्याः। सर्वदा मृगयासक्ततया व्यसनिता दोषः।

केचित् तिर्यग्गतयः कुटिलमार्गगामिनः सुगन्धवाहाः सुग-

---

१ इति नर० च। -रीभूता A B C H इति अग० च। २ के० -चानिच- A B
३ इति अग० च। — सु- C D E F G इति नर० च।

केचित् कौरवसैनिका इव द्रोणाशाद्धचकाः केचित् कुमुदाक-रा इवासोढशूरभासः स्थिता राजपुत्राः। [1]तानेकैकशः समव-

---

न्धधारिणः। पक्षे। तिर्यग्गतयो वायवः। वायोस्तिर्यग्गमनं वैशेषिकभाष्ये। सुगन्धवाहाः शोभनवायवः।

केचित् कौरवसैनिका इव द्रोणाचार्यादाशा जयाशा तत्सूचकाः। द्रोणाचार्योऽस्मत्सेनापतिरिति नास्माकं पराजय इत्येवं परस्परसूचकाः। पक्षे। द्रोणः काकस्तस्मादाशा वासवदत्ता-प्राप्त्याशा तत्सूचकाः। उक्तं च स्वागमस्थितप्रकरणे वसन्तराजे।

इष्टार्थदोऽश्वादिकवाहनस्थश्छत्रादिसंस्थस्तदवाप्तिकारी।
वध्वागमं जल्पति तोरणस्थो ध्वजार्थदो ध्वजतरुस्थितश्च॥

इत्यादि।

द्रोणः कृपीपतौ कृष्णकाके स्याद्राढकेऽपि च।

इति विश्वप्रकाशः।

केचित् कुमुदव्रजा इवासोढशूरभासोऽसोढसूर्यकान्तयः। पक्षे। शूरो वीरः। तालव्यादिः शूरशब्दः सूर्यवाचकोऽपि। शूरस्त्वारभटे सूर्य इति विश्वः। सुभटे शूरः सूर्ये च दृश्यतेऽप्योष्ठ्यविवेकः।

तानेकैकशः समवलोक्य विरक्तहृदया। वर्णितदोषदर्शनात्। असौ कुमारिका कर्णवंशात्मश्चादवततार। सक्कैकवचनाच्च वी-प्सायामित्यच चकारो वीप्सायामित्यस्यानन्तरं द्रष्टव्यः। सक्की-

---

१ समय ता- A B

लोक्य विरक्तहृदयासौ[१] कुमारिका [२]तस्मात् [३]कर्णवंशाद्-वततार।

अथ तस्यामेव रात्रौ स्वप्ने वालिनमिवाङ्गदोपशोभितं कुहू-कण्ठमिव[४] हारिकण्ठं कनकमृगमिव रामाकर्षणनिपुणं जय-

---

कवचनाद्दीप्सायां च। चात् स्वार्थेऽपि। स चाभिधानस्वभावा-देकशब्दादेव। तेनैकशब्दाद्दीप्सायां शस्याभावे द्विर्वचनेऽत्यन्त-स्वार्थिके शसि पक्षे जातैकैकश इत्येतत्सिद्धिः। कर्णवंशो भवे-न्मञ्च इति हारावली।

अथागतेषु राजकुमारेषु विरागोत्तरं तस्यामेव तद्दिवस-सम्बन्धिन्यामेव रात्रौ स्वप्ने निद्रायां सा युवानं ददर्शेत्यन्वयः।

वालिनमिवाङ्गदेन तन्नामकवानरेण। वालिनमिवेत्यादि-धर्मराजमाचकाङ्क्षदित्यन्ते माधुर्यं गुणः। पक्षे। अङ्गदेन केयू-रेण। कुहूकण्ठमिव कुहू इति कण्ठो ध्वनिरस्य तमिव कोकि-लमिव हारिकण्ठं मनोहरस्वरम्। पक्षे। हारी हारयुक्तो मनोहरो वा कण्ठो गलो यस्य तम्।

कनकमृगमिव रामस्य दाशरथेराकर्षणनिपुणम्। मारीच-नामा राक्षसः कनकमृगो बभूवेति प्रसिद्धं रामायणे। पक्षे। रामाणां स्त्रीणाम्।

---

१ -हृदया A B -हृदया सा C D F H २ — तस्मात् D H ३ कर्णीर-याद्- C F H ४ कुहूमिव A B C D E F G H इति जग० च।

न्तमिव वचनामृतानन्दितवृद्धश्रवसं कृष्णमिव [1]कंसहर्षं न कुर्वन्तं महामेघमिव विलसत्करकमादिकन्दं [2]रूपपादपस्या[3]रोहणगिरिं [4]शृङ्गाररसस्य[5] प्रभवगिरिं सुन्दरकथानदीनां सुरभिमासं वैदग्ध्यसहकारस्यादर्शतलं सौजन्यमुखस्यादि-

---

अयन्तमिवेन्द्रपुत्रमिव वचनामृतेनानन्दितो वृद्धश्रवा इन्द्रो येन तम्।

वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः।

जयन्तः पाकशासनिरिति द्वयोरमरः। पक्षे। वचनामृतेनानन्दिते वृद्धानां श्रवसी श्रोत्रे येन तम्। श्रुतिः स्त्री श्रवणं श्रव इत्यमरः।

कृष्णमिव कंसस्य हर्षस्तं न कुर्वन्तम्। मदन्तकत्वादित्यर्थः। पक्षे। कं जनं न सहर्षं कुर्वन्तमपितु सर्वमेव।

महामेघमिव विलसत्करकं स्फुरद्वर्षोपलम्। वर्षोपलस्तु करकेत्यमरः। पक्षे। करो हस्त एव करकः समासान्तः कन्वा।

रूपपादपस्य सौन्दर्यतरोरादिकन्दम्। शृङ्गाररसस्यारोहणगिरिं प्रादुर्भावाद्रिम्। रुह बीजप्रादुर्भावे। सुन्दरकथानदीनां रम्यकथानदीनां प्रभवगिरिमुत्पत्तिगिरिम्। सुरभिवं-

---

१ कंसहर्षमकुर्वन्तं C इति जग० च। २ शृङ्गारपा- A B C D F G H ३ -स्य रोहणगिरिं A B C D F H ४ सकलगुण- A B C D F G H ५ -रससमूहस्य D -रसानां F G

बीजं[1] विद्यालतानां स्वयंवरपतिं कीर्तेः स्पर्धागृहं लक्ष्मीसर-स्वत्योरादिगृहं[2] [3]शीलसम्पदां कोशमिव महासौन्दर्यस्य त्रि-भुवनविलोभनीयाकृतिं युवानं ददर्श । स च चिन्तामणिनाम्नो राज्ञस्तनयः कन्दर्पकेतुर्नाम । सा च स्वप्न एव नामादिक-मश्रौषीत् ।

अनन्तरमहो प्रजापते रूपनिर्माणकौशलमिदं मन्ये स्वस्यैव

---

मन्तस्तत्सहितमाश्रमिव वैदग्ध्यसहकारस्य । सौजन्यमेव मुखं तस्यादर्शतलम् । विद्यालतानामादिबीजम् । कीर्तेः स्वयंवर-पतिम् । लक्ष्मीसरस्वत्योः स्पर्धागृहम् । तथाच कालिदासः ।

निसर्गभिन्नास्पदमेकसंस्थमस्मिन् द्वयं श्रीश्च सरस्वती च ।

इति ।

शीलसम्पदामादिगृहम् । महासौन्दर्यस्य कोशमिव । त्रि-भुवने त्रिभुवनस्य वा विलोभनीया विलोभनकर्त्री आकृतिर्यस्य तम् । कर्तर्यनीयर । स इति स्पष्टम् ।

अनन्तरं जाग्रदवस्थायामिति बहुविधं भाषमाणा सखी-जनेन समं मुमूर्च्छेत्यन्वयः ।

प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत् ।
तृतीये तु स्मृतिः प्रोक्ता चतुर्थे गुणकीर्तनम् ॥
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ।

---

१ इति जग॰ च । कन्दं A B C D F इति मर॰ च । २ सरस्वत्याः स्पर्धागृहं कीर्तिलक्ष्म्योरादिगृहं A B C D E F G H ३ कुलशील- D H

नैपुण्यस्य सौन्दर्यदर्शनोत्सुकमनसा कमलभुवा जगत्त्रयसमवायिरूपपरमाणूनादाय विरचितोऽयमन्यथा कथमिवास्य[1] कान्तिविशेष ईदृशो भवति। वृथैव दमयन्ती नलस्य कृते

---

उन्मादः सप्तमे प्रोक्तो भवेद्व्याधिस्तथाष्टमे॥
नवमे जडता प्रोक्ता दशमे मरणं भवेत्।

इति भरतोदिता दशावस्था वर्णयंश्चतुर्थीं दशां वर्णयति। अहो प्रजापते रूपनिर्माणकौशलमिदं मन्य उत्प्रेक्षे।

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः॥

एतस्यैव नैपुण्यस्य प्रजानिर्माणनैपुण्यस्य सौन्दर्यदर्शनोत्सुकमनसा कमलभुवा ब्रह्मणा जगत्त्रयसमवायिरूपपरमाणूनादाय निर्मितः।

वृथैवेत्यादि। इन्दुमती भोजराजतनया अजे तदभिधाने राजन्यनुरागिणी वृथैव बभूव। अजस्येन्दुमत्यपेक्षया हीनरूपत्वादिति भावः। तथाच कालिदासः।

कुलेन कान्त्या वयसा गुणेन गुणैश्च तैस्तैर्विनयप्रधानैः।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन॥

इत्यत्रात्मनस्तुल्यमित्यनेनोपमानकल्पनेनास्या अधिकगुणवत्त्वप्रतिपादनात्। अतएव रत्नं काञ्चनेन समागच्छत्विति सङ्गच्छते

---

१ कथमिवायमस्य C कथमस्य F H

वनवासवैशसमवाप । मुधैवेन्दुमती मत्स्यष्यप्यजानुरागिणी बभूव। अफलमेव दुःष्यन्तस्य कृते शकुन्तला[१] दुर्वाससः शाप-मनुबभूव। निरर्थकं[२] मदनमञ्जरी नरवाहनदत्तं चकमे।

---

कन्दर्पकेलिप्रभृतीनां कुरूपत्वमिति तासां तेष्वनुरागो वृथैवेति तु स्पष्टमेव।

मत्स्याः सैरन्ध्र्या अजे छागेऽनुरागो विरोधाभासः। एत-न्मूलकोऽपि परिहासः। यद्यप्यजवरणसमय इन्दुमत्या न म-हिषीत्वं तथापि वासवदत्तापरिहासदशायां तत्त्वेन न का-प्यनुपपत्तिः।

अफलमेव दुःष्यन्तस्य राज्ञो न लोकाव्ययेति निषेधस्तु कारकषष्ठीविषयः। कृते तादर्थ्येऽव्ययम्। दुर्वाससः शापं य-स्मिन्नासक्तहृदया स जनस्त्वां न स्मरिष्यतीत्येवंरूपमनुबभूव।

अर्थे कृतेऽव्ययं तावत् तादर्थ्ये वर्तते द्वयम्।

इति कोशसारः। स्पष्टं चैतदभिज्ञानशाकुन्तले।

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव॥

इति।

मदनमञ्जरी तन्नामिका स्त्री नरवाहनदत्तं राजविशेषं

---

१ + -षि A G H २ -कमेव D

[1]निष्कारणमेवोरुयुगविनिर्जितरम्भा रम्भा नलकूबरमचीकम-न[2]। [3]विफलमेव धूमोर्णा [4]स्वयंवरार्थागतानेकदेवगणगन्ध-

---

निष्कारणमेवाचकमत। कमेर्णिङभावे कमेश्च्लेरिति वार्तिकाच्चङ्।

ऊरुयुगविनिर्जितरम्भा रम्भा स्वर्वेश्या निष्कारणमेव नलकूबरं कुबेरसूनुमचीकमत। अत्राप्यसमता। तथाच श्रीहर्षः।

अस्मात् किल श्रोत्रसुधां विधाय
रम्भा चिरं भामतुलां नलस्य।
तत्रानुरक्ता तमनाप्य भेजे
तन्नामगन्धान्नलकूबरं सा॥

उत्तमोपभोगिनो नीचे प्रवृत्तिर्निन्दाहेतुः। तथाच भर्तृहरिः।

मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी।

कमेर्लुङि कमेर्णिङिति स्वार्थे णिङि णिश्रीति चङि णेरनिटीति लोपे णौ चङ्युपधाह्रस्वे चङीति द्वित्वम्। सन्वल्लघुनीति सन्वद्भावे सन्यत इतीत्वेऽभ्यासस्य दीर्घो लघोरिति दीर्घः। अट्।

धूमोर्णा स्वयंवरगतानेकदेवगणगन्धर्वमहत्स्वेषु। षष्ठी चानादर इति चकारादनादरे सप्तमी।ताननादृत्य धर्मराजं पितृपतिं विफलमेवाचकाङ्क्षत्। काचि वाचि माचि काङ्क्षायाम्। लुङ्।

---

१ वि० -वोरुनि- A B वि० -वोरुगरिम- C D G H २ -बरं चकमे A B -बरमचकमत E ३ निष्फलमेव C D ४ स्वयंवरार्थागतदे- C D H

वैसम्बन्धेषु धर्मराजमाचकाङ्क्षदिति[1] बहुविधं[2] चिन्तयन्ती[3] विरहमुर्मुरमध्यमधिरूढेव[4] वाडवाग्निशिखाकवलितेव कालाग्निरुद्रपावकग्रस्तेव पातालगुहाप्रविष्टेव [5]शून्यकरणग्रामे[6] हृदये लिखितमिवोत्कीर्णमिव प्रत्युप्तमिव कीलितमिव निगलितमिव [7]वज्रलेपघटितमिवास्थिपञ्जरप्रविष्टमिव मर्मान्तरस्थितमिव मज्जासारशबलितमिव प्राणपरीतमिवान्तरात्मान-

---

इति बहुविधं चिन्तयन्ती। विरहमुर्मुरेत्यादिनाष्टमीमवस्थां वर्णयति। विरहतुषानलमधिरूढेव। मुर्मुरस्तु तुषानल इति वैजयन्ती।

वाडवाग्निर्वडवानलस्तच्छिखा ज्वाला तया कवलितेव। वाडवो वडवानलः। वह्नेर्द्वयोर्ज्वालकीलावित्युभयत्रामरः।

कालाग्निर्यो रुद्रपावकः शिवालिकनेत्रजन्मा तेन ग्रस्तेव।

इति विरहदाहमभिवर्ण्यान्ध्यं वर्णयति। पातालगुहायां प्रविष्टेव। शून्यकरणग्रामं शून्येन्द्रियवर्गं यद्धृदयं तत्र लिखितमिव। अन्तरात्मानमधिष्ठितमिवान्तरात्मनि स्थितम्। अधिशीङ्स्थासां कर्मेति कर्मसञ्ज्ञा। पललं मांसं तत्र विभक्तमिव।

सप्तमीमवस्थां दर्शयति। उन्मत्तेव। अष्टमीमवस्थां व्या-

---

१ -माचचकाङ्क्षेति A E F G H इति अम० च। -मचीकमतेति B -माकाङ्क्षदिति C २ धर्मराजं चकम एवंविधान्यन्यान्यपि D ३ विचारयन्ती A B D विचिन्तयन्ती H ४ -माकृढेव A B C ५ निरस्तक- D ६ -ग्रामा A C D G -ग्रामेव B E F H ७ वज्रकपाटघ- E F H

मधिष्ठितमिव[1] [2]रुधिराश्रयद्रवीभूतमिव पललसंविभक्तमिव[3] कन्दर्पकेतुं मन्यमानोन्मत्तेव बधिरेव मूकेव शून्येव निरस्तकरणग्रामेव ग्रहगृहीतेव ग्रहग्रस्तेव यौवनसागरतरङ्गपरम्परापरिगतेव[4] रागरज्जुभिरपवारितेव[5] कन्दर्पकुसुमबाणैः कीलितेव [6]शृङ्गारभावनाविषघूर्णितेव रूपपरिभावनाशल्यखचितेव मलयानिलापहृतजीवितेव प्रियसख्यनङ्गलेखे वितर हृदये पाणिपद्मं[7] दुःसहो[8] विरहसन्तापः। मुग्धे मदन-

---

धिमाह। बधिरेव मूकेव। नवमीमवस्थां जडतामाह। शून्येवेत्यादि। मदनव्याधिनिराकरणार्थं शिशिरोपचारं वर्णयन् पुनरष्टम्यवस्थां सूचयति।

प्रियसख्यनङ्गलेखे अनङ्गस्य लेखा यस्यां सा। ईषदुद्भूतमन्मथे विरहवेदनानभिज्ञतया शिक्षणं तदुपचारेषु। हृदये पाणिपद्मं वितर देहि। दुःसहो विरहसन्तापः।

मुग्धेऽनभिज्ञे मदनमञ्जरि चन्दनोदकेन सिञ्च। सरले मन्मथविकारानभिज्ञे वसन्तसेने केशपाशं केशकलापं संवृणु।

---

१ वज्रलेपघटितमिवान्तरात्मानमधिष्ठितमिव मर्मान्तःस्थितमिव मज्जासारसंवलितमिव प्राणपरीतमिवास्थिपञ्जरप्रविष्टमिव A B वज्रकपाटघटितमिवास्थिपञ्जरस्थितमिव मर्मान्तरप्रविष्टमिव मज्जासारवलितमिवान्तरात्मानमधिष्ठितमिव D २ रुधिराशय- C H रुधिरालय- D ३ पललसम्पृक्तमिव C ४ -गतपरिमितेव F ५ रागरज्जुपरिवारितेव C रागरज्जुभिः परिवारितेव F ६ — शृङ्गार- C शृङ्गाररसभा- D G H ७ -पल्लवं A B F G ८ + मे A B C

[1]मञ्जरि सिञ्च चन्दनोदकेन सरले वसन्तसेने[2] संवृणु केशपाशं[3] तरले [4]तरङ्गवति [5]विकिर केतकीधूलिं वामे [6]मदनमालिनि वीजय शैवलदलेन चपले [7]चित्रलेखे लिख चित्रे[8] चित्तचौरं जनं भाविनि विलासवति[9] निक्षिप[10] मुक्ताचूर्णनिकरं रागिणि रागलेखे स्थगय नलिनीदलसमूहेन[11] पयोधरभारं कान्ते[12] कान्तिमति [13]मन्दमपनय बाष्पबिन्दून्।

---

पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे ।

इत्यमरः ।

तरले चञ्चलचित्ते तरङ्गवति केतकीधूलिं केतकीपरागं विकिर । वामे विपरीतक्रियाकारिणि मदनमालिनि नलिनीदलेन वीजय । चपले चित्रलेखे चित्रे चित्तचौरं जनं लिख । भाविनि भावाभिज्ञे मुक्ताचूर्णनिकरं निक्षिप । रागिणि रागवति नलिनीदलसमूहेन पयोधरभारं स्थगयाच्छादय ।

कान्ते कान्तिमति मन्दं बाष्पबिन्दूनपनय । बिन्दूनिति बहुवचनं पीडारुदितसूचकम्। तथाच भरतः ।

बाष्पो नानाश्रुणः पूर्वमसौ सञ्जायते त्रिधा ।

---

१ मदनमञ्जरिके D २ -लेखे D F ३ -कलापं A B D F G H ४ तरङ्गलेखे A B G ५ वितर C H ६ सुन्दरमा- D ७ विभ्रमलेखे C ८ चित्रफलके C ९ भाववति E १० विक्षिप A B C F H ११ -दलेन A B F G H १२ सुकान्ते A B C D F H १३ मन्दमन्द- A C D F G H

इषि भगवति निद्रेऽनुगृहाण मां धिगिन्द्रियैरपरैः किमिति लोचनमयान्येव[1] ममाङ्गानि[2] न कृतानि विधिना भगवन् [3]कुसुमायुधायमञ्जलिस्तेऽनुचरो[4] भव भावयति तादृशे जने

---

निमित्तत्रयसम्बन्धादानन्देर्ष्यार्तिसम्भवः ॥
आनन्दे विलुठन् भवतीर्ष्यायां सतरङ्गिताधरः ।
आर्तावजस्राविकलबहुबकुलबिन्दुसन्दर्भः ।

इति । अत्रास्यावस्थामुन्मादं वर्णयति । व्यभिचारी चोन्मादः । अत्र विभावः प्रियवियोगविभवभ्रंशादयः । अनुभावो वृथा-लपितवृथारोदनादयः ।

भगवति सर्वैश्वर्ययुते । अस्मेयं तं पुनर्दृष्टिगोचरं करि-ष्यतीति स्तुतिः । निद्रे मामनुगृहाण । पूर्वं तत्सम्बन्धाद्यथा सुखमनुभूतमेवं पुनरपि सुखानुभवं यथा करवै तथा रचये-त्यनुग्रह इत्यर्थः । अपरैरिन्द्रियैः किं तददर्शनेनानुपयुक्तत्वा-दुपेक्षा । क्लतेत्यस्य गम्यमानत्वात् तृतीया । गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका ।

वेधसा लोचनमयान्येव ममाङ्गानि न कृतानीति तं धिक् ।
उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

---

१ -यानि A B C D F G H २ सर्वाङ्गानि D ३ कुसुमायुध क्लतोऽञ्जलिर-नुचरो H ४ -स्तवानुचरो C D

मलयानिल [1]सुरतसमुत्कण्ठादीक्षागुरो वह यथेच्छमपगता मम प्राणा इति बहुविधं भाषमाणा सखीजनेन[2] समं मुमूर्च्छ।

अनन्तरं [3]परिजनप्रयत्नोच्छ्वसितजीविता[4] सती[5] क्षणमति[6]शिशिरघनसाररसनिम्नगाकूलपुलिने [7]क्षणमतितुहिनमलयजरससरित्परिसरे क्षणमरविन्दकाननपरिवारितसरस्तट[8]-

---

इति श्लेषे तमित्यत्र द्वितीया।

भगवन् कुसुमायुधायमञ्जलिर्नमस्कारो भाववत्यभिप्रायाभिज्ञे तादृशे जनेऽनुचरो भव। तस्य सेवको भवेत्यर्थः। यथा मां पीडयसि तथा तमपि पीडयेति लतिवात्सल्यादयोग्यत्वाच्च नाभ्यधायि। सम्बन्धं विना गुणाविष्काराभावेनाल्परूपत्वेन हीनत्वादनुचरत्वोक्तिः।

मलयानिल समुत्कण्ठादीक्षागुरो यथेच्छं वह। यथेष्टवहनात् सोऽप्युत्कण्ठितो भविष्यतीत्यभिप्रायात् प्रार्थना। प्रार्थनायां लोट्। मे प्राणा अपगताः। वर्तमाने क्तः। पुंसि भूम्न्यसवः प्राणा इत्यमरः।

अनन्तरं परिजनप्रयत्नेनोच्छ्वसितं जीवितं यस्यास्तादृशी

---

१ सुरतोत्क- A B C F G H सुरतसन्तोत्सवहो- D २ सा सखीजनैः D ३ स॰ -च्छ्वा- C H ४ -सितहृदया जीविता D + च A B D E G ५ — सती C D H ६ शि॰ -सारसरसलि- B H शि॰ -साररजोराजिनि- C ७ स॰ -जलमलय- C D H ८ + -निकट- D

विटपिच्छायासु [1]क्षणमनिलोल्लासितदलेषु कदलीकाननेषु क्षणं कुसुमशय्यासु[2] क्षणं [3]नलिनीदलसंस्तरेषु[4] प्रलयकालोदितद्वादशरविकिरणकलापतीव्रविरहाग्निदह्यमानामतिक्ष्-क्षां[5] विप्राणामिव तनुं [6]बिभ्रती प्रचलदमन्दमन्दरान्दोलित[7]-

---

सत्यतिशिशिरघनसाररसनिम्नगाकूलपुलिनेष्वतिशीतलकर्पूरजलनदीतीरे पुलिनेषु।

क्षणमतितुहिनमलयजरससरित्परिसरेष्वतिशीतचन्दनजलनद्योषु। क्षणमरविन्दकाननपरिवारितं यत् सरस्तस्य तटविटपिच्छायासु। क्षणमनिलोल्लासितानि दलानि येषां तादृशेषु कदलीकाननेषु। क्षणं कुसुमशय्यासु।

क्षणं नलिनीदलसंस्तरेषु नलिनीदलास्तरेषु।

प्रलयकालोदितद्वादशरवीणां किरणकलापवत् तीव्रो यो विरहानलस्तेन दह्यमानामतएवातिक्षामां विप्राणां तनुमिव बिभ्रती। अर्थात् तनुमिति। मुहुर्मुहुः परिभावयन्ती दिक्षु लिखितमिवेत्यादीतस्ततो विलोकयन्ती व्यतिष्ठतेत्यन्वयः।

गुणकीर्तनरूपां चतुर्थीं दशां प्रचलदित्यादिना वर्णयति।

---

१ स० -लोच्छा- G H २ कुसुममयीषु शय्यासु D ३ कमलिनी- D ४ + क्षणं तुषारसङ्घातशिशिरितशिलातलेषु परिखनेन सा लीयमाना D ५ -मानमानसातिक्षामां A B -मानातिक्षामां C E G -मानहृदयामतिक्षामां F -मानां क्षामां H इति नर० च। ६ बिभ्राणा B C D इति नर० च। ७ + -मुग्ध- C

[1]दुग्धसिन्धुतरलतरङ्गच्छटाधवलहासच्छुरिताधरपल्लवं तन्मुखारविन्दं द्विजकुलमिव श्रुतिप्रणयि तदीक्षणयुगलं [2]सहजसुरभिमुखपरिमलमाघ्रातुकामेव सुदूरविनिर्गता[3] सा नासावंशलक्ष्मीः कलङ्कमुक्तेन्दुकलाकोमला[4] पीयूषफेनपटलपाण्डुरा सा[5] [6]द्विजपङ्क्तिस्तदहृष्टचरमनङ्गमतिशयानं रूपं[7] धन्यानि तानि स्थानानि ते च जनपदाः पुण्यानि[8] नामाक्षराणि [9]च

---

प्रचलदमन्दो मन्दरस्तदान्दोलितः कम्पितो दुग्धसिन्धुस्तस्य तरलतरङ्गच्छटावद्धवलो हासो हास्यं तेन छुरितमधरपल्लवं यस्य तादृशं तन्मुखारविन्दं कन्दर्पकेतुमुखकमलम् ।

द्विजकुलमिव ब्राह्मणसमूहमिव वंशमिव वा श्रुतिर्वेदः कर्णश्च तत्र प्रणयि प्रश्रयवत् तदीक्षणयुगलम् । सहजेति कलङ्कमुक्तेति स्पष्टम् ।

अनङ्गमतिशयानं तदनिर्वचनीयं रूपमदृष्टचरम् । भूतपूर्वे चरट् । धन्यानि तानि स्थानानि ते च जनपदा यत्र स वसतीति शेषः ।

तानि नामाक्षराण्यभिधानवर्णानि सुकृतभाञ्जि पुण्यानि यान्यमुना परिष्कृतान्यलङ्कृतानीति परिभावयन्ती चिन्तयन्ती

---

१ दु० -दुग्धतरल- C दु० -हासदन्तुरित- C २ स० -मुखकमलपरि- A B E F G स० -मलामोदमा- A B D E F G H ३ -तना- C H -तास्य E G ४ -मलपी- A B C E G H ५ -सा A B -रास्य E H -रहि- F ६ द्वि० -ङ्क्तिरदृष्ट- A B F G H द्वि० -मङ्गाङ्गम- C ७ -यानरूपं A B D -यानं तद्रूपं F ८ पुण्यनामा- A B E F G H ९ — च E G

तानि सुकृतभाञ्जि यान्यमुना [1]परिष्कृतानीति मङ्क्षुर्मुहुः परिभावयन्ती दिक्षु विदिक्षु[2] लिखितमिव नभस्युत्कीर्णमिव विलोचने[3] प्रतिबिम्बितमिव चित्रफलके लिखित्वा[4] पुरो दर्शितमिवेतस्ततो [5]विलोकयन्ती व्यतिष्ठत । अथ तस्याः सारिका तमालिका नाम सखीभिः [6]सहालोच्य कन्दर्पकेतोर्भावमा-

---

दिक्षु विदिक्षु लिखितमिव नभस्याकाश उत्कीर्णमिव विकीर्णमिव विलोचने प्रतिबिम्बितमिव ।

चित्रफलके लिखित्वा पुरो दर्शितमिवेतस्ततो विलोकयन्ती । अननुभूतमपि सङ्कल्पेनावलोक्यते । तदुक्तम् ।

कामक्रोधभयोन्मादाचौरस्वप्नाद्युपद्रवात् ।
असत्यान्यपि पश्यन्ति पुरतोऽवस्थितानि च ॥

इति । व्यतिष्ठत । समवप्रविभ्यः स्थ इति तङ् । पत्रहारिणी दूतीयम् ।

कामिन्याः कामिनश्चापि सन्देशार्थं तु पत्रिकाम् ।
प्रापयत्यचिरेणैतामाहुः पत्रस्य हारिकाम् ॥

इति ।

अथ तस्याः सारिका तमालिका । नामेति प्रसिद्धौ । तस्य-

---

१ पुरस्कृतानीति A B F G २ + च A D ३ -चनप्र- C -चनयोः F ४ चित्र- चित्रपटे लिखितमिव A B चित्तपट्टलिखितमिव C चित्रपटे D चित्तचित्रपटे लिखित्वा F चित्रफलके लिखितमिव G चित्तचित्रपटलिखितमिव H ५ इति जग० च । व्यालोक- A B F G ६ समा- A B D

कलयितुं [1]प्रस्थितागता च मयैव सार्धमत्रैव [2]तरोरधस्तात् तिष्ठतीत्युक्त्वा विरराम।

अथ[3] मकरन्दः सहर्षमुत्थाय तमालिकां विदितवृत्तान्तामकरोत् सा च कृतप्रणामा मकरन्दाय पत्रिकामुपानयत्[4]।

अथ स तां स्वयमेवावाचयत्[5]।

---

स्त्रीभिः सहालोच्य कन्दर्पकेतोर्भावं वासवदत्तानुरागमाकलयितुं प्रस्थिता मयैव सार्धं सहागता चात्रैव तरोरधस्तात् तिष्ठतीत्युक्त्वा विरराम।

अथ शुकवाक्यश्रवणोत्तरं मकरन्दः सहर्षमुत्थाय तमालिकां विदितो वृत्तान्तो यया तादृशीमकरोत्।

सा च तमालिकापि कृतप्रणामा सती मकरन्दाय पत्रिकामुपानयत्।

अथ स मकरन्दस्तां पत्रिकां मयि सत्येतावन्मात्रमपि प्रयासोऽस्या माभूदित्यभिप्रायात् स्वयमेवावाचयत्।

---

१ प्रष्टागता H २ तरोरधस्तिष्ठ- A B D F G H ३ + तच्छ्रुत्वा D ४ अथ सहर्षमुत्थाय मकरन्दो विदितवृत्तान्तां तमालिकामकरोत् सा तु कृतप्रणामा कन्दर्पकेतवे पत्रिकामुपानयत् A B अथ सहर्षमुत्थाय कन्दर्पकेतवे मकरन्दो विदितवृत्तान्तां तमालिकामकरोत् सा च कृतप्रणामा कन्दर्पकेतवे पत्रिकामुपानयत् C अथ तच्छ्रुत्वा सहर्षमुत्थाय मकरन्दो विदितवृत्तान्तां तमालिकामकरोत् सा च कृतप्रणामा कन्दर्पकेतवे पत्रिकामुपानयत् D अथ सहर्षमुत्थोऽयं मकरन्दो विज्ञातवृत्तां तां तमालिकामकरोत् सा तु कृतप्रणामा कन्दर्पकेतवे पत्रिकामुपानयत् F अथ सहर्षमुत्थाय मकरन्दो विदितवृत्तां तमालिकामकरोत् ततः सा कृतप्रणामा कन्दर्पकेतवे पत्रिकामुपानयत् H ५ अथ स्वयमेवादाय वाचयति A B अथ च तां स्वयमवाचयत् C अथ स्वयं वाचयति F अथ स तां स्वयमवाचयत् G H

प्रत्यक्षदृष्टभावाप्यस्थिरहृदया हि कामिनी भवति।
स्वप्नानुभूतभावा दृढयति न प्रत्ययं युवतिः॥

तच्छ्रुत्वा[1] कन्दर्पकेतुरमृतार्णवमग्न इव सर्वानन्दानामुपरिवर्तमानो मन्दमुत्थाय[2] प्रसारितबाहुयुगलस्तमालिकामालिलिङ्ग[3]। अथ तयैव सार्धं किं करोति किं वदति कथमास्त इत्यादि सकलं वासवदत्तावृत्तान्तं पृच्छंस्तत्र तां निशां दिवसमप्यतिवाह्य[4] कन्दर्पकेतुरुवास।

---

आर्ययाह। प्रत्यक्षं दृष्टो भावः पुरुषाभिप्रायोऽनया तादृश्यपि कामिनी हि यतोऽस्थिरहृदया मय्यनुरक्त एवायमित्यनिश्चयचित्ता भवति। स्वप्नानुभूतभावा युवतिः प्रत्ययं स्वप्नदृष्टं स्वानुरक्तत्वनिश्चयं न दृढयति। न दृढीकरोतीत्यर्थः। प्रत्यक्षदृष्टे यत्रानिश्चयस्तत्र परोक्षे का वार्तेति भावः। काव्यार्थापत्तिरलङ्कारः। कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते। इति। आर्या छन्दः।

लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः।
षष्ठोऽयं न लघू वा प्रथमेऽर्धे नियतमार्यायाः॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयति पदनियमः।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥

---

१ एतच्छ्रुत्वा A B ततस्तच्छ्रुत्वा D २ -परिमत इव मन्दमन्दमुत्थाय A B -परिवर्तमानममात्मानं मन्यमानो मन्दमुत्थाय D मन्दमधःप्रसा- F ३ -युगलस्तामालिलिङ्ग C ४ + तस्मात् प्रदेशात् तया सह D

अत्रान्तरे भगवानपि मरीचिमाली तं वृत्तान्तमिव कथयितुं मध्यमलोकमवततार[1]। अथ वासरताम्रचूडचूडाचक्राकारश्चक्र[2]वाकचक्रसङ्क्रामितसन्तापतयेव मन्दिमानमुद्वहन् [3]मन्दारस्तवकसुन्दरः [4]सिन्दूराहतसुरराजकुम्भिकुम्भविभ्रमं [5]बिभ्रा[6]णस्ताण्डवचण्डवेगोच्छलितधूर्जटिजटाजूटकूटबन्धबन्धुरवि-

---

इति लक्षणात्। तच्छुलेति स्पष्टम्।

अथ तथैवेत्यपि स्पष्टम्।

अत्रान्तरे भगवान् मरीचिमाल्यपि वृत्तान्तं वासवदत्तावृत्तान्तं कथयितुमिव मध्यमलोकं भूलोकमवततार।

अथ चरमार्णवपयसि ममज्जेति सम्बन्धः।

वासरमेव ताम्रचूडस्तस्य चूडाचक्राकारः। चक्रवाकाणां चक्रं समूहस्तत्र सङ्क्रामितः सन्तापो येन तद्भावतयेव मन्दिमानमल्पतेजस्त्वमुद्वहन् मन्दारस्तवकसुन्दरः सिन्दूरेणाहतोऽभिभूतश्छादितो यः सुरराजकुम्भिकुम्भस्तद्विभ्रमं तदाकारत्वादन्त्येकत्वाशास्तीति विशिष्टभ्रमं विलासं च बिभ्राणः। पूर्वचार्थेऽन्तर्भावितण्यर्थोऽत्र भृञ्। द्विपायिपूर्वप्रभृतिकुम्भिसोमजा इति हारावली।

---

१ -वासरत् A B D G H  २ इति अग० च। वार्कचक्रहृदयस- B D वाकचक्रवाकहृदयस- F  ३ मन्दारकुसुमस- A C G  ४ सिन्दूररञ्जितसु- A B सिन्दूराङ्कितसु- C D सिन्दूरालङ्कृतसु- H  ५ बिभ्राणः सन्ध्यातापः- D F  ६ च० -गोच्चलित- D च० -गोच्छलित- G च० -जूटबन्ध- A B F H च० -जूटमुकुटकोटिबन्ध- D

[1]कटवासुकिभोगमणिताटङ्कस्तनाभिमण्डलः [2]सन्ध्यासन्धिनी-[3]सरसयावकपटलधारावारुणीवारविलासिन्यरुणमणिकुण्ड-लकान्तिः [4]कालकरवालच्छन्नवासरमषिप्रकन्धचन्द्राकारो

---

ताण्डवे चण्डवेगेनोच्छ्रसितेन जटाजूटकूटबन्धेन बन्धुर उन्नतानतोऽतएव विषमविन्यासो यो वासुकिस्तस्य भोगमणिः फणामणिः स एव ताटङ्कः स्त्रीणां कर्णभूषणं तस्य नाभिस्तत्तु-ल्यरूपो मण्डलो यस्य सः। वर्तुलत्वार्थं ताटङ्करूपकम्। बन्धुरं तून्नतानतमित्यमरः।

सन्ध्येव सन्धिन्यकालदुग्धा वृषाक्रान्ता वा गौस्तस्याः सर-सयावकपटवासः

पीनायाश्चातिदुग्धाया गोः शृङ्गाराय मानवाः।
रञ्जयन्ति शिरोदेशमन्यच्च बहुधा किल॥

क्वचिद्यावकपटलेति पाठः। अस्मिन् पाठे यावकपटलशब्देन यावकपटलमिव यावकपटलं लोकप्रसिद्धमेदद्दीतिपञ्चविशेषं रञ्जनतिलकं विवक्षितम्।

सन्धिनी तु वृषाक्रान्ताकालदुग्धगवोः स्मृताः।

इति विश्वप्रकाशः। सन्ध्यापुरन्ध्रीति पाठः सुगमः।

वारुण्येव वारविलासिनी तस्या अरुणमणिकुण्डलवत् का-

---

१ क॰ -ताण्डव- D क॰ -तासङ्क- E क॰ -टङ्कायङ्कायना- A B C D F H इति अग॰ च। २ सन्ध्यासैरन्ध्रीसर- F ३ स॰ -पटधार- B C H इति अग॰ च। स॰ -पट्टधार- D इति नर॰ च। स॰ -लासिनीमणि- B C D H ४ कालकर-वालच्छिन्नवा- A B F दिनकरकरच्छिन्नवा- C H इति अग॰ च। दिनकरकर-वालच्छिन्नवा- D F का॰ -अहिषकबन्धच C D F G H

मधुपूर्णकपालपात्रमिव[1] कालकपालिनोऽम्लानकुसुमस्तबक[2] इव नभःश्रियो [3]गगनाशोकतरुस्तबक इव [4]कनकमयदर्पण इव प्रतीचीविलासिन्या भगवान् [5]हिममणिश्वरमार्णवपयसि तरलतरङ्गवेगोच्छालितविद्रुमविटपाकृतिर्ममज्ज[6] । [7]क्रमेण च

---

न्निरस्य सः। कालकरवालेन छत्तस्छिन्नो वासरमहिषस्कन्धस्त-च्छ्राकारः । करवालः कृपाणवदित्यमरः ।

कालकपालिनो मधुपूर्णकपालपात्रमिव। नभःश्रियोऽम्लान-कुसुमस्तबक इव। तत्क्रीडनायेति भावः ।

गगनमेवाशोकतरुस्तस्य स्तबक इव। प्रतीचीविलासिन्याः क-नकमयदर्पण इव । हिममणिर्भगवांश्चरमार्णवपयसि ममज्ज ।

क्रमेण भगवती सन्ध्या समकृष्यतेत्यन्वयः। पूर्वं रजोविलु-ठितानि पश्चादुत्थितानि कुलायार्थीन्यतएव परस्परकलह-विकलानि कलविङ्ककुलानि तेषां कलकलेन वाचालानि शि-खराग्राणि येषां तादृशेषु शिखरिषु वृक्षेषु सत्सु ।

कलविङ्कश्चित्रपृष्ठो गृहनीडो वृषायणः ।

इति हारावली। शिरोऽग्रं शिखरं वा नेति तत्प्रकरणेऽमरः।

वसतेर्निवासस्थानस्य काङ्क्षेच्छा येषां तादृशेषु ध्वाङ्क्षेषु काकेषु। अनवरतेति स्पष्टम् ।

---

१ -कपालचषकमिव H २ + -वतंस C ३ गगनाङ्गणाशो- C ४ कनकदर्प- A B C D F H ५ सूर्यचरमा- A B चरमा- C D E F G चरमसमार्णव- H ६ -विकटाकृतिर्ममज्ज D ७ ततः क्र- D इति नर० च ।

[1]रजोविलुठितोत्थितकुलायार्थिपरस्परकलहविकलकलविङ्क-[2]कुलकलकलवाचालशिखरेषु शिखरिषु [3]वसतिकाङ्केषु [4]ध्वाङ्क्षेष्वनवरतदह्यमानकालागुरुधूपपरिमलोद्गारेषु[5] वासागारेषु [6]दूर्वाञ्चिततटिनीतटनिविष्टविदग्धजनप्रस्तूयमानकाव्यकथाश्रवणोत्सुकभिक्षुजनकलकलनिवारणक्रुद्धेषु वृद्धेष्वालोलिकातरलरसनाभिः कथितकथाभिर्जरतीभिरतिलघु-

---

दूर्वाभिरञ्चितं यत् तटिनीतटं तत्र निविष्टविदग्धजनैः प्रस्तूयमानानां काव्यकथानां श्रवणोत्सुका अतएव भिक्षुजनकलकलनिवारणार्थं क्रुद्धास्तादृशेषु वृद्धेषु ।

आलोलिकायां बालानां निद्रार्थं क्रियमाणे स्वरलोल इति लोकप्रसिद्धे मुखध्वनिविशेषे तरला रसना जिह्वा यासां ताभिः कथितकथाभिर्जरतीभिरतिलघुकरतालजनितसुखे शिशयिषमाणे शयितुमिच्छौ शिशुजने । तदुक्तम् ।

आलोलिका मुकुलिका उल्लुलिर्मुखघण्टिका ।

इति । विरचिता कन्दर्पमुद्रा प्रसाधनं याभिस्तासु चुद्रासु वेश्यासु ।

---

१ रजोविलुठनो- A B रजोलुठितो- C रजोराजिलुठितो- D र० -कलहार्थि- D २ कु० -कलारावचा- C कु० -विचालितशि- A B C D F ३ वसतिवाका- A B C D E F G H ४ ध्वा० -धूमपरि- A B G ५ -रिषु A F G ६ दू० -मठनिषण्णगोष्ठीकविद- A B C F दू० -तटीनिषण्णगोष्ठीकविद- D E G H दू० -मानमधुमथनकथा- C दू० -मानकथा- D

करतालजनितसुखे शिश्रयिषमाणे[1] शिशुजने विरचितकन्दर्पमुद्रासु क्षुद्रासु [2]कामुकजनानुबध्यमानदासीजनविविधा[3]श्लीलवचनश्रुतिविरसीकृतसन्ध्यावन्दनोपविष्टेषु शिष्टेषु रो[4]मन्थमन्थरकुरङ्गकुटुम्बकाध्यास्यमानम्रदिष्ठगौष्ठीनपृष्ठास्वरण्यस्थलीषु [5]निद्रालुद्रोणकुलकलितकुलायेषु काननिका-

---

क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च।

इति विश्वप्रकाशः।

कामुकेति स्पष्टम्।

रोमन्थेन चर्वितस्याकृष्य पुनश्चर्वणेन मन्थरेण कुरङ्गकुटुम्बकेनाध्यास्यमानं म्रदिष्ठं मृदुतरं गौष्ठीनानां भूतपूर्वगोस्थानानां पृष्ठं पृष्ठवत् पृष्ठं यासु तासु भूमीष्वरण्यस्थलीषु सतीषु।

गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्।

इत्यमरः।

---

१ हृद्भ्यालोलिकातरलतररसनाभिरतिलघुतरकरतलताडनजनितसुखे कथितकथाभिर्जरतीभिरनुगते शिश्रयिषमाणे A G हृद्भ्यालोलिकातरलतररसनाभिरतिलघुतरकरतलताडनजनितसुखाभिः कथितकथाभिर्जरतीभिरनुगते शिश्रयिषमाणे B हृद्भ्यालोलिकातरलरसनाभिः कथितकथाभिरतिलघुतरकरतलताडनजनितसुखाभिर्जरतीभिरनुगते शिश्रयिषमाणे C F हृद्भ्यालोलिकामुखररसनाभिः कथितकथाभिरतिलघुकरताडनजनितसुखे जनयित्रीभिरनुगीते शिश्रयिषमाणे D हृद्भ्यालोलिकातरलतररसनाभिः कथितकथाभिरतिलघुकरतालजनितसुखे जननीभिरनुगते शिश्रयिषमाणे E चालोलिकाकरतलतरलतररसनाभिः कथितकथाभिरतिलघुतरकरताडनजनितसुखे जरतीभिरनुगते शिश्रयिषमाणे H २ का॰ -नुबध्य- A D H ३ श्लो॰ -विमनो- C श्लो॰ -कृतेषु D ४ म॰ -वमेदिष्ठ C ५ निद्रारतद्रो- A B C D E F G H नि॰ -कलिलकु- C D H इति अम॰ च।

येषु कापेयविकलकपिकुलेष्वाश्रमतरुषु निर्जिगमिषति अर-न्तरुकोटरकुटीरकुटुम्बिनि कौशिककुले तिमिरतर्जननिर्गतासु दहनप्रविष्टदिनकरकरशिखास्विव¹ ²प्रस्फुरन्तीषु ³दीपले-खासु मुखरितधनुषि वर्षति शरनिकरमनवरतमशेषसंसार-

---

निद्रालुद्रोणकुलं काककुलं तेन कलितकुलायेषु व्याप्त-नीडेषु काननिकायेषु काननसमूहेषु ।

निकायस्तु पुमान् लक्षे सधर्मिप्राणिसंहतौ ।

इति विश्वप्रकाशः ।

कापेयं कपिकर्म तेन विकलानि कपिकुलानि येषु तेष्वा-श्रमतरुषु । कपिज्ञात्योर्ढक् ।

अरन्तरूणां चिरन्तनवृक्षाणां कोटरा निष्कुहास्त एव कुटीराणि तेषु कुटुम्बिनि कुटुम्बवति कौशिककुले निर्जिगमि-षति निर्गच्छति । निष्कुहः कोटरं वा नेत्यमरः । वासः कुटी-तिष । कुटीशमीशुण्डाभ्यो र इत्यल्पले रः ।

तिमिरतर्जनार्थं निर्गतास्विव दहनप्रविष्टदिनकरकराणां किरणानां शिखासु प्रस्फुरन्तीषु दीपलेखासु । सौरं तेजः सायमग्निं सङ्क्रमते । आदित्यः सायमग्निं प्रविशतीत्यादि-श्रुतिः । मुखरितधनुषि । समासान्तविधेरनित्यत्वान्नानङ् ।

---

१ -शाखास्विव A B C D २ स्फुर- A B C D G H विस्फुर- F ३ दीप-शिखासु A दीपकलिकासु B C

शेमुषीमुषि मकरध्वजे [1]सुरतारम्भाकल्पशोभिनि [2]शम्भली-
भाषितभाजि भजति भूषां भुजिष्याजने [3]सैरन्ध्रीबध्यमानरस-
नाकलापजल्पाकजघनस्थलीषु[4] जनीषु[5] विश्रान्तकथानुबन्ध-

---

शरनिकरं वर्षति। अनवरतमशेषसंसारशेमुषीमुषि सकलसं-
सारमतिहारके मकरध्वजे। धीः प्रज्ञा शेमुषी मतिरित्यमरः।

सुरतारम्भस्याकल्पेन वेषेण शोभिनि शम्भलीनां कुट्टनीनां
भाषितं वचनं भजति तादृशि भूषां भजति भुजिष्याजने प्रेष्या-
जने। आकल्पवेषौ नेपथ्यम्। शम्भली कुट्टनी समे।

नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः।

इति त्रिष्वमरः।

भुजिष्या प्रेष्यमात्रे स्यात् स्वतन्त्रायामपि स्मृता।

इति धरणिः।

सैरन्ध्रीभिर्बध्यमानरसनाकलापेन काञ्चीकलापेन जल्पा-
कजघनस्थलीषु जनीषु वधूषु।

सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका।

स्याज्जल्पाकस्तु वाचाल इति द्वयोरमरः।

जनी सीमन्तिनीवध्वोरुत्पत्तौ च जनिर्मता।

इति विश्वः।

---

१ सुरताकल्पारम्भ- A B C D F H २ सम्भ्रान्तम्भ- C ३ सै० -रसनाजल्पा- A E F G H सै० -रसनाजालजल्पा- B C D ४ -जघनासु A B C D F G H ५ वाराङ्गनासु C

तया [1]प्रवर्तमानानेकजनगृहगमनत्वरेषु[2] चत्वरेषु [3]समावासितकुक्कुटेषु निष्कुटेषु [4]कृतयष्टिसमारोहणेषु बर्हिणेषु[5] विहितसन्ध्यासमयव्यवस्थेषु गृहस्थेषु [6]सङ्कोचोदञ्चदवाञ्चत्केसरकोटिसङ्कटकुशेशयकोशकोटरकुटीरशायिनि षट्चरणचक्रेऽथानेन वर्त्मना भगवता [7]भानुमता समागन्तव्यमिति [8]सर्वपट्टमयैर्वसनैरिव मणिकुट्टिमालिभिरिव[9] विरचिता वरुणेन

---

विश्रान्तकथानुबन्धतया प्रवर्तमानानेकजनेषु गृहगमनत्वरायेषु तेषु चत्वरेष्वङ्गणेषु। अङ्गणं चत्वराजिरे इत्यमरः।

निष्कुटेषु गृहारामेषु समावासितकुक्कुटेषु। गृहारामास्तु निष्कुटा इत्यमरः।

बर्हिणेषु मयूरेषु कृतयष्टिसमारोहणेषु। मयूरो बर्हिणो बर्हीत्यमरः। गृहस्थेषु विहितसन्ध्यासमयव्यवस्थेषु। सङ्कोचेति स्पष्टम्।

अथानन्तरं वरुणेनानेन वर्त्मना भानुमता गन्तव्यमिति सर्वपट्टमयैर्वसनैर्मणिकुट्टिमालिर्मणिबद्धभूमिरिव रचिता। कुट्टिमोऽस्त्री निबद्धा भूरित्यमरः। कालकृतेत्यादि स्पष्टम्।

---

१ प्रवर्तमानकथकजन- A B C D E F G H इति अम० च। २ सत्वरेषु A B C F G इति अम० च। ३ समाध्या- C H ४ कृतयष्टिशिखरसमा- A B D G H ५ बर्हिणस्थेषु A G ६ स० -दञ्चदुञ्चकेसर- C F स० -वाञ्चदुञ्चकेस- D स० -शयकोटरककोशकु- B ७ भानुना समाग- A B C G भानुना गन्त- D F H ८ रत्नप- D ९ -लिपिरिव A B D F

[1]कालक्षतस्य दिवसमहिषस्य रुधिरधारेव विद्रुमलतेवाम्बरमहार्णवस्य रक्तकमलिनीव गगनतडागस्य काञ्चनसेतुरिव[2] कन्दर्पगमनस्य[3] मञ्जिष्ठारागारुणपताकेव गगनहर्म्यतलस्य लक्ष्मीरिव [4]स्वयंवरपरिगृहीतपीताम्बरा भिक्षुकीव तारानुरक्ता[5] रक्ताम्बरधारिणी[6] भगवती सन्ध्या समदृश्यत। क्षणेन च क्षणदारागरचनाचतुरासु सन्ध्याशिष्यास्विव वेश्यासु

---

लक्ष्मीरिव स्वयंवरपरिगृहीतः पीताम्बरो विष्णुर्यया। पक्षे। पीताम्बरं पीतनभः।

भिक्षुकीव तारायां देवतायामनुरक्ता रक्ताम्बरधारिणी रक्तवस्त्रधरा। पक्षे। तारा नक्षत्राण्यनुरक्ता यस्याम्। आदित्यादिः। रक्तमम्बरमाकाशो यस्याम्।

क्षणेन गणक इव नक्षत्रसूचके प्रदोषे तिमिरमजृम्भतेत्यन्वयः। क्षणदा रात्रिस्तस्या रागरचना तत्र चतुरासु सन्ध्याशिष्यास्विव वेश्यासु। पक्षे। क्षणदा आ साकल्येन रागा भैरवादयस्तेषां रचना यथायथं स्वरग्राममूर्च्छनासहितं गानं तत्र चतुरासु। यद्वा। क्षणदानां स्वसुखप्रदानामा साकल्येन रागरचना प्रीतिरचना तत्र चतुरासु।

---

१ कालेन क्षतस्य दिवसमहिषस्य B कालेन क्षतस्य महिषस्य C कालक्षतदिवसमहिषस्य- E कालक्षतस्य महिषस्य G कालक्षपाक्षतदिवसमहिषस्य- H
२ -सेतुरिव A -केतुरिव D ३ कन्दर्पस्य D ४ स्वयंवरमु- A B D H स्वयंमु- C F ५ रागरक्ता A B C F G H इति असं० च। -रक्ताम्बर- D
६ + च वारयोषिदिव पल्लवानुरक्ता कालेयकताम्रपयोधरा बभ्रुरिव कपिलतारका D

तुलाधारशून्यायां पण्यवीथ्यामिव दिवि[1] घनघटमानदल-पुटासु पुटकिनीषु तिमिरप्रतिहस्तकेष्विव तत्र इतः परिभ्र-मत्सु कमलसरसि[2] मधुकरेषु [3]विकलकुररीकृतकोलाहलेन

---

तुलाधारा वणिजस्तैः शून्यायां पण्यवीथ्यामिव दिवि। पक्षे। तुलाराशिराधारो येषां ते चन्द्रादयस्तैः शून्यायाम्। तथाच माघः।

अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः।
विगतोरुतापमतमिस्रमभादपदोषतैव विगुणस्य गुणः॥

इति।

तुलाधारस्तुलाराशौ भवेद्वाणिजकेऽपि च।

इति विश्वः।

घनं निविडं घटमानदलपुटासु पुटकिनीषु कमलिनीषु। राजादेर्योगस्यापदि विपणिनो विपणमपसारयन्ति सश्रीकास्य स्वद्वारपिधानमाचरन्तीति लोकव्यवहारो ध्वनितः। हरताल इति भाषायाम्।

नालीकिनी पुटकिनी विसनालिस्य पद्मिनी।

इत्युत्पलिनी।

कमलसरसि तिमिरप्रतिहस्तकेष्विवेतस्ततो भ्रमरेषु परि-भ्रमत्सु। प्रतिहस्तकोऽपरहस्तकः। सञ्ज्ञायां कन्। गुमास्ता

---

१ मम्बवीथ्यां B H २ -सिरसि D ३ पतिविकल- A B C F G

रविविरहविधुरासु विलपन्तीष्विव सरोजिनीषु गणक इव
[1]नक्षत्रसूचके प्रदोषे हरकण्ठकाण्डकालिमसनाभि दैत्यवल-

---

इति भाषायाम्। मालिन्येन साम्यात् प्रतिहस्ततोत्प्रेक्षणम्। प्रभौ
पराभूते क्षुद्रः परहस्तदारादीन् समया लब्धत्वान् सम्भोजिघृ-
क्षया प्रेषयत्येवेति लोकप्रसिद्धो ध्वनितः।

रविविरहविधुरास्ततएव विकलकुररीरुतच्छलेन पक्षि-
विशेषशब्दमिषेण विलपन्तीष्विव सरोजिनीषु।

गणक इव दैवज्ञ इव नक्षत्रसूचके शुभाशुभकार्योपयोग्य-
श्विन्यादिनक्षत्रसूचके। पक्षे। नक्षत्राणि तारास्तत्सूचके द्योतके
प्रदोषे। दैवज्ञगणकावपीत्यमरः।

हरस्य कण्ठकाण्डं गलस्तम्भस्तत्कालिमसनाभि दैत्यवलमिव
प्रकृष्टः श्रेष्ठस्तारको दैत्यविशेषो यत्र।

काण्डं चावसरे बाणे नाले स्कन्धे च शाखिनाम्।

स्तम्भे रहसि गर्वे चेति धरणिः। पक्षे। प्रकृष्टास्तारका भौमा-
दिनक्षत्राणि यत्र। तथाच माघः।

सवितुस्त्विषाक्षि इव शोऽपि न यः
स तमीं तमोभिरधिगम्य तताम्।
द्युतिमग्रहीद्ग्रहगणो लघवः
प्रकटीभवन्ति मलिनाश्रयतः॥

इति।

---

१ नक्षत्रपथसूचके A B C F G

मिव [1]प्रकटतारकं भारतसमरमिव वर्धमानोलूककलकलं[2] धृष्टद्युम्नवीर्यमिव कुण्ठितद्रोणप्रभावं नन्दनवनमिव[3] संच-रत्कौशिकं [4]कृष्णवर्त्मेवाखिलकाष्ठापहारकं सगर्भमिव[5]

---

भारतसमरमिव वर्धमान उलूकस्य कुरुयोधविशेषस्य शकुनिपु-त्रस्य कलकलो यत्र। पक्षे। उलूकाः पेचकाः।

उलूकः कुरुभेदेऽपि पेचके शक्रभेदिनि।

इति विश्वः। सङ्ग्रामे प्रयोजनयोरुभ्यं द्रष्टव्यम्।

धृष्टद्युम्नवीर्यमिव द्रुपदपुत्रवीर्यमिव कुण्ठितो द्रोणस्याचा-र्यस्य प्रभावो येन। पक्षे। कुण्ठितो द्रोणानां काकानां प्रभावो यत्र।

द्रोणो ना दग्धकाके स्याद्वस्त्यादौ गुरावपि।

इति रुद्रः।

नन्दनवनमिवेन्द्रवनमिव संचरन् कौशिक इन्द्रो यत्र। पक्षे। कौशिका उलूकाः।

कौशिकः पेचके शक्रे विश्वामित्रे च कौशिकः।

इति विश्वः।

कृष्णवर्त्मेवाखिलकाष्ठानामिन्धनानामपहारकम्। पक्षे। काष्ठा दिशस्तासामपहारकमाच्छादकम्। यद्वा। कृष्णवर्त्मान-मिव दुराचारमिवाखिलकाष्ठानामखिलोत्कर्षाणामपहारकं नाशकम्।

---

१ प्रकट- D F प्रस्फुट- H २ -कोलाहलं D ३ नन्दनमिव B F H ४ छ° -काष्ठाप- A D ५ इति अग° च नर° च। सगर्भमिव A B C E F G H आसन्नगर्भमिव D

घनतरपाषाणकर्करासु[१] गिरितटीषु सचक्षुरिव सुप्तसिंहनय-नदीधितिच्छटाकपिलेषु[२] सानुषु सजीवमिव तमोमणिभिः संवर्धितमिवाग्निहोत्रधूमलेखाभिर्मांसलितमिव [३]कामिनीकेश-पाशसंस्कारागुरुधूमपटलैरुद्दीपितमिव घनतरलीनमधुकर-

---

कृष्णवर्त्मा हुताशे स्याद्दुराचारे विधुन्तुदे।
काष्ठा दारुहरिद्रायां काष्ठमानप्रकर्षयोः।
स्याद्दिशि स्थानमात्रे च काष्ठमाख्यातमिन्धने।

इति विश्वप्रकाशः।

सगर्भमिव ससत्त्वमिव। अधिकमिति यावत्। क्वचित् सगर्व-मित्यपि पाठः। घनतराः पाषाणाः कर्कराश्च यत्र तासु गिरि-तटीषु। कांकर इति भाषायाम्।

सचक्षुरिव सिंहनेत्रदीधितिच्छटाकपिलेषु सानुषु। सुप्त-सिंहेति पाठस्तु भ्रामकत्वादुपेक्षितः।

तमोमणिभिर्ज्योतिरिङ्गणैः सजीवमिव। इतस्ततो भ्रमणा-दिति भावः।

ध्वान्तोन्मेषखद्योतस्तमोमणिर्ज्योतिरिङ्गणः।

इति व्याडिः।

अग्निहोत्रधूमलेखाभिः संवर्धितमिव। कामिनीकेशपाशस-स्कारार्थमगुरुधूमपटलानि तैर्मांसलो बलवांस्तदाचरितमिव। पिच्छादित्वाल्लः। बलवान् मांसलोंऽसल इत्यमरः।

---

१ -पिशासु A B २ -पिशेषु D ३ कामिनीनां केश- A B C F G H
2 A

[1]पटलमेचकितपेचकिकपोलतलदानधाराशीकरैः पुञ्जीकृतमिव [2]विततमालमालाच्छायासु[3] लीयमानमिव [4]कज्जलश्यामभोगिभोगेषु प्रावरणमिव रजनीपांसुलायाः पलितौषधमिव वृद्धवारविलासिन्या अपत्यमिव रजन्याः सुहृदिव

---

घनतरं निबिडतरं लीनानामुपविष्टानां मधुकराणां पटलैर्मेचकितानां श्यामवदाचरितानां पेचकिनां गजानां कपोलतलदानधाराशीकरैरुद्दीपितमिव।

उलूके करिणः पुच्छमूलोपान्ते च पेचकः।

कालश्याममलमेचका इति द्वयोरमरः। प्रौढोक्तिः।

वितता या तमालमाला तच्छायासु पुञ्जीकृतमिव। कज्जलश्यामभोगिभोगेषु सर्पशरीरेषु लीयमानमिव। रजनीपांसुलाया रात्रेः कृष्णाभिसारिकायाः प्रावरणमिव। स्वैरिणी पांसुला च स्यादित्यमरः।

वृद्धवारविलासिन्याः पलितस्य जराकृतकेशशौक्ल्यस्यौषधं तन्निवारकमिव। अन्धतमसे केशानां विशेषानुपलम्भादिति भावः। पलितं वेश्यानां जीविकाभङ्गहेतुरिति ता एव वर्णिताः। पलितं जरसा शौक्ल्यं केशादावित्यमरः।

रजन्या रात्रेरपत्यमिव। तत उद्भूतत्वादिति भावः। कलि-

---

१ पटलैर्मेचकितमिव पेच- A D F प० -पोलतरलदान- A B प० -पोलदान- C H २ विततमालतमाल- A C E F G H विततमाल- B D ३ -लकाननच्छायासु B C D E G -लकाननशिखासु F -लकाननतलच्छायासु H ४ कज्जलसश्या- A B C D F

कलिकालस्य मित्रमिव दुर्जनहृदयस्य[1] बौद्धदर्शनमिव[2] प्रत्यक्षद्रव्यमपह्नुवानं तिमिरं व्यजृम्भत[3]। [4]मुदितमिवातिमत्तमातङ्गमनोहरगण्डमण्डले फलितमिवातिसान्द्रबहलच्छ[5]दविततमालतमालकानने [6]स्फुरितमिवातिकान्तकान्ताजन[7]घनतरकेशपाशसंहतौ[8] मिलितमिवेन्द्रनीलमणिरश्मिभिरति-

---

कालस्य सुहृदिव। सदाचारनाशकत्वान्मालिन्याच्च साम्यात् सुहृत्त्वम्। दुर्जनहृदयस्य मित्रमिव।

बौद्धदर्शनमिव बौद्धशास्त्रमिव प्रत्यक्षमपि चक्षुरिन्द्रियगोचरमपि न तु परमाण्वादिवदतीन्द्रियं द्रव्यमपह्नुवानम्। सर्वं ज्ञानमयं जगदिति मन्यमानास्ते।

सूर्याचन्द्रमसौ व्योम ताराचक्रं वसुन्धरा।
सरितः सागराः शैलाश्चित्तस्यैव विभूतयः॥

इति प्रत्यक्षपरिकल्पितमप्यर्थमन्यथयन्ति।

अतिमत्तमातङ्गमनोहरगण्डमण्डले मुदितमिव हृष्टमिव। अतिसान्द्रबहलपत्रविततमालतमालकानने फलितमिव। अतिकान्तकान्ताजनघनतरकेशपाशसंहतौ स्फुरितमिव। इन्द्रनीलमणिरश्मिभिर्मिलितमिव। अतिशयमांसलं तमः। अवटा गर्तास्तटा अटव्यश्च तत्रोत्पन्नमिव।

---

१ -यानां C D F  २ इति अग० च। बौद्धसिद्धान्तमिव A B C D E G H  ३ -रमब्रभत A D E F G H व्यभ्रमत C  ४ मुदितमिव मत्त- A B C  ५ द-विततमाल- A B C F G H ६ स्फारित- A B F H स्फा० -जनतरलतर- B  ७ घनतरतरलकेश- H  ८ -सक्तौ A B C G -केशसंहतौ D E H

श्यमांसलं तम इवावटतटाटवीषु[1] साटोपमिव[2] स्फुटपाटवो-[3]त्कटप्रकटविशङ्कटकुटजविटपोत्कटविनटितषट्पदालिषु[4] [5]घनतरघोरघस्मरविषधरभोगभासुरं मदभरमत्तदन्तिदन्त-

---

अवटः स्यात् खले गर्ते कूपे कुहकजीविनि।

इति विश्वप्रकाशः।

स्फुटं पाटवं पटुत्वं तेनोत्कटमुदग्रं प्रकटो व्यक्तो विशङ्कटो महान् यः कुटजविटपस्तेनोत्कटविनटितषट्पदालिषु साटोपमिव सावष्टम्भमिव।

विकटः सुन्दरे प्रोक्तो विशालविकरालयोः।

इति विश्वप्रकाशः। विशङ्कटं पृथु बृहदित्यमरः।

घनतरं घोरं भयानकं घस्मरो भक्षको यो विषधरस्तद्भोगवद्भासुरम्। घोरं भीमं भयानकम्। भक्षको घस्मरोऽद्मर इत्युभयत्रामरः। सृघस्यदः क्मरच् घसेः।

मदभरमत्तदन्तिदन्तद्युतितर्जनेन जर्जरं शिथिलावयवं तमः। मदमत्त इति विशेषणं गजानां तारुण्यद्योतनाय तच्च दन्तयोः श्वैत्याय।

निशाकरारम्भसमये चन्द्रोदयारम्भसमये सङ्कुचत्कुवलय-

---

१ -सलमवटतटाटवीषु C -सलतममवटतटाटवीषु D -सलं तम उन्मत्तमिवा-वटतटाटवीषु E -सलं तमोऽवटाटवीषु F -सलतममुन्मत्तमिवावटतटाटवीषु G
२ + अति- A B C F G H इति जग॰ च नर॰ च। ३ त्क॰ -शङ्कटानेकविट-पोत्कटविटपिविलुठितष- D ४ -दावलीषु C D G H इति जग॰ च नर॰ च।
५ घनतरघोरघोरमतिघस्म- A B C H घनतरघोरतरघघरविष- D

द्युतितर्जनजर्जरं तमः। निशाकरारम्भसमय[1] इव [2]सङ्कुचत्कुवलयव्याजेन विरचिताञ्जलिपुटे [3]नतिमति तमोतिमिरे क्षणेन च सन्ध्याताण्डवाडम्बरोच्छलितमहानटजटाजूटकूटकुटिल-[4]विवरविवर्तितजह्नुकन्यावारिधाराबिन्दव इव विकीर्णा [5]दुर्धर-[6]धरणिभारभरभुग्नभीमदिङ्मत्तमातङ्गमण्डलकरपरिमुक्त-[7]

---

व्याजेन विरचिताञ्जलिपुट इव। अतएव नतिमति नम्रे तमोतिमिरे सति।

क्षणेन तारका व्यराजन्तेत्यन्वयः। पूर्वं तमःप्रारम्भे ता एव वर्णिता इदानीं चन्द्रोदयप्रारम्भ इति न किञ्चिदसमञ्जसम्। सन्ध्यासु ताण्डवं नृत्यं तस्याडम्बरः समारम्भस्तेनोच्छलिते महानटस्य शम्भोर्जटाजूटकूटकुटिलविवरे विवर्तिता या जह्नुकन्या गङ्गा तस्या वारिधाराबिन्दवस्त इव विकीर्णा त्रिसृताः। ताण्डवं नटनं नाट्यमित्यमरः।

आडम्बरः समारम्भे गजगर्जिततूर्ययोः।

इति विश्वप्रकाशः।

दुर्धरधरणिभारभरभुग्नभीमदिङ्मत्तमातङ्गमण्डलं समूह-

---

१ -समय A D २ सङ्कुचितकु- A B C D F G H स० -व्याजादि- A B F G स० -व्याजवि- C D H ३ नमति नातितनीयसि तमो- A B नातितनीयसि तमो- C नमति तनीयसि तमो- D नमति तमो- E F H अवनमति-तमो- G ४ विवरवर्तिज- E F H विवरावर्तज- D ५ दुर्धरतरधर- G ६ ध० -दिङ्मातङ्ग- A B C D F G H ध० -तङ्गमण्डलमुक्ताः करिणो- C ध० -तङ्गमुक्ताकरणो- D ७ -तङ्गमण्डलकरमुक्तशीकरनिकरा F

शीकरच्छटा [१]इवातिदवीयोनभस्तलभ्रमणखिन्नदिनकरतुरगवान्तफेनस्तबका इव[२] गगनमहासरःकुमुदकाननसन्देहदायिन्यो विश्वं गणयतो विधातुः शशिकठिनीखण्डेन तमोमषीश्यामेऽजिन इव नभसि[३] संसारस्यातिशून्यत्वाच्छून्यबिन्दव इव वितता जगत्त्रयविजयविनिर्गतस्य [४]मकरकेतो रति-

---

स्तत्करैः शुण्डाभिः परिमुक्ताः शीकरच्छटा अम्बुकणच्छटास्ता इव।

करो वर्षोपले पाणौ शुण्डाप्रत्ययरश्मिषु।

इति विश्वप्रकाशः।

अतिदवीयो दूरं नभस्तलं तत्र भ्रमणेन खिन्ना दिनकरतुरगास्तैर्वान्तफेनस्तबका इव। दवीयश्च दविष्ठं च सुदूर इत्यमरः।

गगनमहासरसः कुमुदकाननसन्देहदायिन्यः। तुल्यत्वादित्यर्थः।

विश्वं गणयतो विधातुस्तमोमषीश्यामेऽजिने चर्मणीव नभस्याकाशे शशी चन्द्र एव कठिनी खटिका तस्याः खण्डेन शकलेन रचिता इति शेषः। संसारस्यातिशून्यत्वात्। नश्वरत्वेनेत्यर्थः। शून्यबिन्दव इव। कठिनी खटिकायां त्विति विश्वप्रकाशः।

जगत्त्रयविजयार्थं विनिर्गतस्य मकरकेतोः कामस्य रतेः प्रि-

---

१ इव तता अति- D इव॰ -नभःस्थल- C D G H इव॰ -रथतुरग- D G इव॰ -तुरगविसरवा- C D F २ + शीर्णा B + कीर्णा C ३ वियति A B C D F G H ४ कुसुमकेतो C D H

करतलविकीर्णलाजा[१] इव [२]गुटिकास्त्रगुलिका इव पुष्पधन्वनो वियदम्बुराशिफेनस्तबका इव रतिविरचिता गगनाङ्गणे आतर्पणपञ्चाङ्गुलय इव [३]विकीर्णा व्योमलक्ष्मीहारमुक्तानिकरा[४] इव [५]चन्द्रचिताचक्राद्वात्यावेगव्यस्ताः[६] कामकीकस-

---

याया: करतलविकीर्णलाजा इव। पुष्पधन्वनो गुटिकास्त्रं गुलेल इति भाषायाम्। तस्य गुलिका इव। गुरिया गोली इति वा द्वयं भाषायाम्।

वियदम्बुराशेः फेनस्तबका इव। गगनाङ्गणे रतिविनिर्मिता आतर्पणम्। अयिपन इति भाषायाम्। तस्य पञ्चाङ्गुलयः। छुटकी इति भाषायाम्। ता इव। उत्सवादावातर्पणेनाङ्गुली रञ्जयित्वा कुड्यादि रञ्जयन्तीति सम्प्रदायः।

आतर्पणं च सौहित्ये विन्द्यादालिम्पनेऽपि च।

इति विश्वप्रकाशः।

विकीर्णा विक्षिप्ता व्योमलक्ष्म्या हारमुक्तानिकरा इव। चन्द्र एव चिताचक्रं तस्माद्वात्यावेगेन व्यस्ता इतस्तत उत्पतिताः कामकीकसखण्डाः कामास्थिखण्डास्त इव। चिता चित्या चितिः स्त्रियाम्। कीकसं कुल्यमस्थि चेति द्वयोरमरः।

---

१ -कीर्णा लाजा B E G -कीर्णा लाजाञ्जलय D २ गुटिकास्त्रस्य गु- C F ३ विकीर्णव्यो- A B E G ४ -मुक्ताफलनिकरा A B F G ५ इति अग० च। हरकोपानलदग्धकामचिता- C D हरकोपानलदग्धकामचन्द्रचिता- G ६ -न्यस्ताः A D

खण्डा इव तिमिरोद्गमधूमधूमलसन्ध्यानलपरितप्तगगनमहास्थलीकटाहभृज्ज्यमानलाजानुकारिण्य[१] इव तारका व्यराजन्त।

ताभिः श्वित्रितमिव वियदशोभत। दीर्घोच्छ्वासरचनाकुलं [२]सुश्लेषवक्त्रघटनापटु सत्कविवचनमिव चक्रवाकमिथुनमती-

---

तिमिरमेव धूमस्तेन धूमलः कृष्णलोहितः सन्ध्यैवानलो वह्निस्तेन परितप्तो गगनमहास्थल्येव कटाहस्तत्र भृज्ज्यमानलाजानुकारिण्यः। धूमधूमलौ कृष्णलोहित इत्यमरः।

ताभिस्ताराभिः श्वित्रितं सञ्जातकुष्ठमिव वियदराजत। कोठो मण्डलकं कुष्ठं श्वित्र इत्यमरः। चित्रितमिति पाठे सञ्जातचित्रम्।

दीर्घोच्छ्वासो दीर्घपरिच्छेदस्तद्रचनयाकुलं व्याप्तम्। यद्वा। दीर्घोच्छ्वासरचनानां कुलं गृहम्। शोभनः श्लेषोऽलङ्कारो गुणविशेषो वा वक्त्रं छन्दोभेदस्तद्रचनापटुः सत्कविस्तत्काव्यमिव। पक्षे। दीर्घोच्छ्वासस्य महोच्छ्वसनस्य रचनयाकुलं व्याकुलम्। सुश्लेषवक्त्रघटना शोभनः श्लेष आलिङ्गनं यत्र तादृशी वक्त्रघटना मुखसंयोजनं तत्र पटु चक्रवाकमिथुनमतीवाखिद्यत।

आख्यायिका परिच्छेद आश्वासोच्छ्वासकावपि।

इत्युत्तरतन्त्रम्। कुलं जनपदे गृहे।

---

१ -मानरविकरधान्यार्धस्फुटितलाजबीजानुकारा B C F H इति अम० च।
२ संश्लेष- D इति अम० च नर० च।

वाखिद्यत । कमलिनीवनसञ्चरणलग्नमकरन्दबिन्दुलुब्ध-[1] मुग्धमधुकरमालाशबलगात्रं[2] कालपाशेनेव [3]मूर्तरामशापे-नाकृष्यमाणं चक्रवाकमिथुनं[4] विजघटे । रविविरहविधुरायाः

सजातीयगणे गोत्रे देहेऽपि कथितं कुलम् ।

इति विश्वप्रकाशः ।

एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः ।

तच्छ्लेषेण यत् स शब्दज्ञैः श्लेष इत्यभिशब्दितः ॥

इति भोजराजः । श्लिष्टमस्पृष्टशैथिल्यं इति गुणप्रकरणे दण्डी ।

वर्णां नाधनसौ स्यातामश्रेर्थोऽनुष्टुभि ख्यातम् ।

इति केदारः ।

पटुस्तीक्ष्णोऽस्फुटे दक्षे निष्ठुरे निर्दयेऽपिच ।

इति रुद्रः ।

कमलिनीवनसञ्चरणैर्लग्नमकरन्दबिन्दुषु लुब्धा सतृष्णा मुग्धा रम्या मधुकरमाला तया शबलं चित्रं गात्रं यस्य तत् । कालपाशेनेव मूर्तरामशापेन सम्यग्यथा रात्रौ न मिलतस्तथाकृष्यमाणं चक्रवाकमिथुनं विजघटे विघटितम् ।

रविविरहविधुरायाः कमलिन्या हृदयमिव चक्रवाकमिथुनं द्विधा पपाट । भट पट गतौ ।

---

१ -लुब्धमुग्धमधु- C G H  २ -शबलतया C  ३ मुद्गराम- D मू० -शापेनावकृ- C H  ४ + विधुरं H

[1]कमलिन्या हृदयमिव द्विधा पपाट चक्रवाकमिथुनम्। आगमिष्यतो हिमकरदयितस्य पार्श्वे सञ्चरन्ती कुमुदिन्या भ्रमरमाला दूतीवालक्ष्यत। तारकाव्याजादस्तङ्गतस्य दिवाकरस्य शोकादिव स्थूलाश्रुबिन्दुभिः [2]ककुभो व्यरुदन्। भास्वतो निजदयितस्य [3]विरहादभिनवकिञ्जल्कराजिव्याजेन मुर्मुर इव[4] नलिनीकोशहृदये जज्वाल। [5]रविरश्मिभस्मित-

---

कुमुदिन्याः पार्श्वे सञ्चरन्ती भ्रमरमालागमिष्यतो हिमकरदयितस्य चन्द्रप्रियस्य दूतीवालक्ष्यत। सञ्चरन्तीत्यत्र तृतीयान्तेन योगाभावात् समस्तृतीयायुक्तादिति नात्मनेपदम्।

अस्तङ्गतस्य दिवाकरस्य शोकात् ककुभस्ताराव्याजेन व्यरुदन्। कमलिनी कोशहृदये भास्वतो निजदयितस्य विरहादभिनवकिञ्जल्कराजिव्याजेन मुर्मुर इव तुषानल इव जज्वाल। मुर्मुरस्तु तुषानल इति वैजयन्ती।

रविरश्मिभस्मितनभोवनस्य समीराग्निरिव। श्रुतिवचनमिव वेदवाक्यमिव परिहृतं दिगम्बरस्य बौद्धस्य दर्शनं शास्त्रं येन तत्। पक्षे। दिगम्बरयोर्दिगाकाशयोर्दर्शनं येन तत्। शार्वरं शर्वरीसम्बन्धि। शेषत्वेन विवक्षायामण्। भवे तु ठञ् स्यात्।

---

१ कमलिनीकामिन्या H २ शोकादिव क- D H शोकात् क- E ३ वि॰ -राजिव्या- A B C D F H ४ मुर्मुरमिव A B E F G H इति अम॰ च नर॰ च। ५ रविरश्मिदवाग्निभ- B C G

नभोवनमभीराग्निरिव श्रुतिवचनमिव[1] [2]परिहृतदिगम्बरदर्शनं[3] सद्यो द्रावितराजपट्ट इव समुद्रप्रवाह इव शार्वरमन्धकारं व्यजृम्भत।

क्षणेन च क्षणदाराजकन्यकाकन्दुकः[4] कन्दर्पकनकदर्पण उदयगिरिबालमन्दारपुष्पस्तबकाकृतिः [5]प्राचीललाटतट-

---

एवं शार्वरस्य तमसो निवृत्तय इत्यादयो व्याख्याताः। तमो व्यजृम्भत।

क्षणेन रजनीपतिरभ्युदयमाससादेत्यन्वयः। क्षणदाराजकन्या कन्दुको गेन्दुकः। गेन्दुकः कन्दुक इत्यमरः। गेन्दा इति गालमसुरिया इति भाषायाम्।

कन्दर्पस्य कनकदर्पणो मुकुरः। दर्पणे मुकुरादर्शावित्यमरः। कनकपदं रक्तत्वेन साम्यार्थम्।

उदयगिरेर्बालमन्दारपुष्पस्तबको नव्यमन्दारगुच्छकस्तदाकृतिः। स्याद्गुच्छकस्तु स्तबक इत्यमरः। बालपदमारुण्यातिशयाय।

प्राचीललाटतटे कुङ्कुमबिन्दुपत्त्रवदाकारो यस्य। अथ कुङ्कुमम्। कश्मीरजन्माग्निशिखमित्यमरः।

---

१ श्रुतिदर्शनमिव A F G २ धृतदि- A F H हृतदि- B C ३ + क्षण इवातिरस्कृतविश्वरूपभावं A B क्षणमपि तिरस्कृतविश्वरूपभावं D F ४ -कन्यकाकनककन्दुकः A B -कन्यकाकरकन्दुकः C F -कन्याक्रीडाकन्दुकः D ५ प्राचीललनाललाट- A प्राचीमहिलाललाट- D प्रा० -कुङ्कुमाम्बुबिन्दु- D

कुङ्कुमबिन्दुचक्राकारः कनककुण्डलमिव नभःश्रियः दिव्यवधूप्रसाधिकाहस्तस्रस्तालक्तकपटलमिव[1] गगनसौधकनककुम्भ इव प्रस्थानकनककलश इव त्रिभुवनविजयविनिर्गतस्य मकरकेतोः [2]कन्दर्पकार्तस्वरतूणमुखकान्तितस्करः [3]प्राच्यशैलशिखराग्रप्ररूढजपाकुसुमच्छविः [4]स्वच्छकुङ्कुमपिण्डपूर्ण-

---

नभःश्रियः कनककुण्डलमिव कर्णवेष्टनमिव। कुण्डलं कर्णवेष्टनमित्यमरः।

दिव्यवधूनां प्रसाधिका तद्धस्तात् स्रस्तमलक्तकपटलमिव। गगनेति स्पष्टम्। प्रस्थानकनकेति च।

कन्दर्पस्य कार्तस्वरतूणमुखकान्तेः सुवर्णनिषङ्गमुखशोभायास्तस्करोऽपहारकः। तच्छ्रेष्ठत्वादिति भावः। तूणोपासङ्गतूणीरनिषङ्गा इत्यमरः।

प्राच्यां भवः प्राच्यः शैलस्तच्छिखराग्रे प्रकटं जपाकुसुमं तच्छविः। द्युप्रागपेति यत्। ओड्रपुष्पं जपापुष्पमित्यमरः।

स्वच्छकुङ्कुमेन पिण्डं सान्द्रं पूर्णपात्रमिव निशाविलासिन्याः।

पिण्डं सान्द्रे बले काले तूलेऽपि परिकीर्तितम्।
पूर्णपात्रं वस्तुपूर्णपात्रे वर्धायकेऽपि च ॥

इति विश्वः।

---

१ -पिण्ड इव D २ क० -मुखचक्रका- A B C D F ३ प्राक्- A B C D
४ स्व० -पूर्णकरस्थितपा- A B H स्व० -पूर्णस्फटिकपा- C

पाचमिव निशाविलासिन्याः कुङ्कुमारुणैकस्तनकलश[1] इवाख-
ण्डलाशाङ्गनायाः[2] क्षीरसिन्धुरिव हरिणाधिष्ठितो राम इव
लक्ष्मणान्वितः सुग्रीव इव तारापतिः सुराजेव रक्तमण्डल[3]
उदयारुणमण्डलो [4]रजनीपतिरुदयमाससाद।

ततः कामिनीहृदयसङ्क्रामित इव [5]चकोराङ्गनानेत्रपुटपीत

---

कुङ्कुमारुणैकस्तनकलश इवाखण्डलाशाङ्गनाया इन्द्रदिगङ्गनायाः। आखण्डलः सहस्राक्ष इत्यमरः।

क्षीरसिन्धुरिव हरिणा विष्णुनाधिष्ठितः। पक्षे। हरिणेन। राम इव लक्ष्मणेनानुगतः। पक्षे। लक्ष्मणा चिह्नेन।

सुग्रीव इव तारा तन्नामिका स्त्री। पक्षे। तारा नक्षत्राणि।

सुराजेव रक्तं मण्डलममात्यादिसमूहो यस्य। पक्षे। मण्डलं बिम्बम्।

उदयेनारुणं मण्डलं बिम्बं यस्य सः।

ततः कामिनीहृदये सङ्क्रामित इव चकोराङ्गनाभिर्नेत्रपुटैः पीत इव कुमुदकोशैर्लीढ इवास्वादित इव क्षीणतां जगाम क्षणदाकृतो रागश्चन्द्रमण्डलस्य लौहित्यम्।

अनन्तरं ग्रहपतिश्चन्द्र उज्जगाम। शर्वरी क्षपाङ्गना गोपी

---

१ -भर A B F H  २ -शाविलासिन्याः B H -लाङ्गनायाः C  ३ — क्षीर॰ रक्तमण्डल A B D E H  ४ रजनी -पतिरुदयाचलमा- C रजनी -पतिरभ्युदय- H इति नर॰ च।  ५ इति नर॰ च।  च॰ -पुटपाटित A B C F G H च॰ -पुटपोटपीत D

इव रक्तकुमुदकोशलीढ इव क्षोणतां क्षणदाक्रान्तो जगाम रागः।

अनन्तरं[1] [2]शर्वरीशजाङ्गनाविष्कृतनवनीतस्वस्तिक इव कुसुमकेतोर्मुखच्छायामुद्रितमुकुर[3] इव श्वेतातपत्रमिव मकरकेतोर्दन्तपालिचक्रमिव वियन्महासेः श्वेतचामरमिव[4] मदन-

---

तया आविष्कृतं नवनीतस्य स्वस्तिकचतुष्कमिव। चौक इति भाषायाम्। नवनीतं नवोद्धृतमित्यमरः।

स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः।

इति विश्वप्रकाशः।

कुसुमकेतोर्मुखच्छायामुद्रितो मुकुर इव। मकरकेतोः श्वेतातपत्रमिव। वियन्महासेराकाशखड्गस्य। पालयतीति पालिः। पाल रक्षणे। ण्यन्तः। अच इः। दन्तस्य गजदन्तस्य पालिर्गजदन्तमयः। त्सरुरिति यावत्। मदनमहाराजस्य श्वेतचामरमिव। चामरं तु प्रकीर्णकमित्यमरः। निशायमुनाया वालुकापुलिनमिव। गगनमहातापसस्य स्फाटिकलिङ्गमिव पूजार्थं स्फाटिकमयशिवलिङ्गमिव। काल एवोरगः कृष्णोरगस्तस्याण्डमिव। नभोमहार्णवस्य कम्बुरिव शङ्ख इव। मदनारिणा शिवेन दग्धस्य मकरकेतोश्चैत्यमिव।

---

१ + च A B C G २ श॰ -ाङ्गनाभुजाविः- D श॰ -ाङ्गनाविष्कृतनव- F G
३ — -मुकुर A B C D E F H इति अम॰ च। ४ -र इव A C D H

महाराजस्य वालुकापुलिनमिव निशायमुनायाः स्फाटिकलि-ङ्गमिव गगनमहातापसस्याण्डमिव कालोरगस्य कम्बुरिव नभोमहार्णवस्य चैत्यमिव मदनारिदग्धस्य मकरकेतोस्सिता-चक्रमिव कलङ्काङ्गारशबलं सङ्कल्पजन्मनो गगनगामिगङ्गा-पुण्डरीकमिवाम्बरमहार्णवफेनपुञ्ज इव पारदपिण्ड इव कालधातुवादिनो राजतकलश इव दूर्वाप्रवालशबलः[१] क-

---

चैत्यमायतने बुद्धगृहे चोद्देश्यपादपे।

इति विश्वः।

कलङ्काङ्गारः। यद्यप्यङ्गारोऽलातमुल्मुकमित्यमरः। साग्नि-काष्ठमङ्गारः। अङ्गारचुम्बितमिव व्यथमानमास्त इति प्रयुक्तं भवभूतिना। तथापि निरग्न्यग्निदग्धं श्यामं काष्ठमिहाङ्गार-पदेन विवक्षितं योग्यत्वात्। कोइला इति भाषायाम्। तेन शबलं चिताचक्रमिव सङ्कल्पजन्मनः। एतादृशेऽर्थे श्रीहर्षेण हेमीय इङ्गालशब्दः प्रयुक्तः। वितेनुरिङ्गालमिवायशः पर इति। गगनगामिगङ्गाया मन्दाकिन्याः पुण्डरीकमिव सिताम्भोज-मिव। यदत्र वक्तव्यं तदग्रे वक्ष्यते।

अम्बरं व्योमैव महार्णवस्तत्फेनपुञ्ज इव। कालधातुवादिनः पारदपिण्ड इव। दूर्वाप्रवालशबलो राजतकलश इव। दूर्वा-प्रवालेति कलङ्कसाम्याय। कन्दर्परथचक्रत्वादुदयाचलचारु-

१ + मनोभवाभिषेकस्य D

[1]न्दर्पदर्पस्य चक्रचारस्याम्बरप्रासादस्य[1] पारावत इव [3]उदयाचलचालचूडामणिरिव [4]ऐरावतलुप्तसिन्दूरकुम्भस्थलमिव भग्नशृङ्गपुराणगोमुण्डखण्ड इव तारकाश्वेतगोधूमशालिनो नभःक्षेत्रस्य मलयजपिण्डपाण्डुरराजतपात्रमिव [5]सिद्धाङ्गनाहस्तस्रस्तं[6] शशपतिरुज्जगाम ।

---

चूडामणिः । अम्बरमेव प्रासादो राजगृहं तस्य पारावत इव। गृहप्रकरणे। प्रासादो देवभूभुजाम्। पारावतः कलरवः कपोत इति द्वयोरमरः । ऐरावतस्य लुप्तसिन्दूरं मृष्टसिन्दूरं कुम्भस्थलमिव। श्वेतगोधूमैः शालिनः श्वेतत्वं तारासाम्याय। काबिली गोहूं इति भाषायाम्। शोभमानस्य नभःक्षेत्रस्य भग्नशृङ्गः।भग्नविषाणत्वं वर्तुलत्वार्थम्। पुराणश्चर्मरहितो गोमुण्डखण्ड इव। सीमानिर्माणार्थं रक्षार्थं वा क्षेत्रे गोमुण्डः समारोप्यते। सिद्धाङ्गनाहस्तात् स्रस्तं भ्रष्टं मलयजेन घृष्टचन्दनेन पिण्डं चूर्णमतएवातिपाण्डुरं राजतपात्रं रौप्यपात्रमिव। यद्वा। मलयजपिण्डैर्घृष्टचन्दनगुटिकाभिः पाण्डुरमित्यादि। उभयत्र अंशनवर्णनं चन्दनपङ्कबिन्दवो गुटिका वा तारा विकीर्णा इति ध्वनयितुम्। लोचनमधुकराणां पुण्डरीकमिव। वर्तुलत्वसा-

---

१ न्द०-रम्बरमहाप्रा- A B C D F G २ -प्रासादश्वेतपा- D H ३ उदयाचलचूडा- A B C D F ४ ऐरावतचालितसि- D ५ सिद्धाङ्गनाजवयिचलं C ६ + इव गगनात् तारापति- D + नभसि E

अस्य पुण्डरीकं लोचनमधुकराणां शयनीयसैकतमिव[1] [2]चित्तहंसानां स्फाटिकव्यजनं[3] विरहवह्नीनां श्वेतशाणचक्रं[4]

---

स्यार्थं विकासपर्यन्तमायद्दे तु कुमुदम्। एवं पूर्वत्रापि। चित्त-हंसानां शयनीयसैकतमिव शयनार्हसिकतामयदेश इव।

विरहवह्नीनां स्फाटिकव्यजनम्। तत्सम्बन्धकलादिति भावः। अत्र व्यजनं वर्तुलमग्निसम्बुक्षकं विवक्षितम्। छितनी इति भाषायाम्।

अत्रान्तरे मानिनीमानपाटनपटुकुमुदिनीकान्तोदयावस-रेऽभिसारिकासार्थप्रहितानां ज्योत्स्नाभिसारिकासमूहप्रेषितानां दूतीनामन्योऽन्यसङ्घट्टनविरहनिवेदनादिकर्मकुशलानां प्रियत-मान् प्रति वल्लभान् प्रति ईर्ष्या उपालम्भावर्जनरूपार्थद्वयोपेताः। सेर्ष्या। उपालम्भे। विकारैर्मदनविकारजन्यचित्तवृत्तिविशेषै-र्भङ्गुरा मानावस्थायामिव न केवलं परुषा एवापितु कि-ञ्चित्स्वापराधव्यञ्जका इत्यर्थः। आवर्जन इदम्। सप्रपञ्चा वक्रो-क्त्यादिसहिताः प्रवादाः प्रकृष्टवैदग्ध्यविशिष्टा वादा बभूवुः।

रतार्थिनी तु सङ्केतं याति या साभिसारिका।

इति रसरत्नहारः। उपालम्भे।

प्रत्यग्ररश्लेषमयेत्यादि स्वगुणं प्रकटयन्नाह। अवस्तीर्णं कौपीनावशेषीकृतम्। अनुदरा कन्येतिवदल्पतावचनञोऽर्थः। उक्तं च।

---

१ — इव A B C D E F २ विमलराजहंस- C F G ३ + इव A B F G H
४ + इव A B E G H

कम्बरव्यवसायकातराम्[1] । कथामात्रेऽभिसारिकाकार्यप्रवीणानां[2]

तस्मात् तुल्यप्रभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ।

इति । आत्मानं तत्त्वतो नाकलयसि न जानासि । यथा धन-लुब्धया कामसञ्ज्ञया मत्समस्तस्मै सेवको वसुनाकृतोऽपराधितस्तथा तवापि का गतिर्भविष्यतीति वक्ति । आत्मानमित्यादि । यदा । स्त्रीणां कृतं कार्मणादि कर्म । कृतमिति कृञः कर्मणि क्तः । तत्त्वतो नाकलयस्तत आत्मानमेव रक्ष । यथा कामसञ्ज्ञया आत्मानमेवन् रक्षन् स महर्षिर्मरीचिः सेवक इव परिभ्रामित-स्तथा त्वमपि भ्रमिष्यसीति अवीक्ष्यात्मानमेवेति । स्पष्टं चैतदप-द्वारवर्मचरिते । मूलकर्म तु कार्मणमित्यमरः ।

वैश्विकं मतेदमभिधाय कुट्टणयमतं मत्वाभिधत्ते । आत्मानं प्रत्यवतीत्यवा । अवेः कर्तर्यच् । सा चासौ स्त्री अनेकार्थो तया कृतमवस्त्रीकृतं नीचनारीकर्म । भृङ्गकीटन्यायादति-स्त्रीसेवनात् त्वं स्त्र्येव परैर्ज्ञायस इति गदति । अवेत्यादि । अवस्त्रीकृतं वधकयोपिहुतमात्मानं तत्त्वतो नाकलयसि । आ वर्जने । षितत्त्वतो बहुलाद्धेतोः । षिञ् बन्धने । क्तः । त्वमेव मम प्रिया नान्येत्यच प्रपथ इति प्रपथरूपपापाद्दित्यर्थः । षित-त्त्वत इत्यच भ्रारो भरीति पाक्षिकतकारलोप इति तु जगद्-रस्य प्रमाद एव । अनचि च इति तकारद्वित्वे रूपसाम्यं बोध्यम् ।

१ — मधुमयवसायकातराम् E G H २ -प्रेषितानां A B C F G H +कामवतो-कानां D

प्रियतमाम् प्रति दूतीनां ह्यर्थाः सेर्ष्याः[१] सप्रपञ्चा विकार-

---

ष्ववस्त्रीभ्यो गोपस्त्रीभ्यः कृतं पर्याप्तमात्मानं नाकलय मा जानीहि। मत्सख्येव त्वामभिलषत इति त्वं गोपनारीसक्तो माभूरिति भावः।

कृतं युगेऽपि पर्याप्ते विहिते हिंसिते फले।

इति विश्वप्रकाशः।

कं सुखं सुखकारी लयः संश्लेष आलिङ्गनं विलासो वा यस्य स कलयोऽकलयः। न अकलयो नाकलयः। त्वतो मत्सख्या अन्यस्याः सित बहु स्त्रीकृतं स्त्रीभ्यः पर्याप्तमात्मानमव प्रीणय। मत्सख्या सह रतिं विधायात्मानं सन्तोषयेति भावः। कं मूर्धसुखवारिष्विति विश्वप्रकाशः। लयो विलासे संश्लेषे इति च। यद्वा। नाकस्य दुःखस्य लयः संश्लेषः सम्बन्धो यस्य। अकं पापे च दुःखे चेति विश्वः। यद्वा। अस्य वासुदेवस्य वो वचोऽवस्तत्र स्त्री लक्ष्मीस्तया कृतं पर्याप्तमवस्त्रीकृतं लक्ष्मीपूर्णमात्मानं तत्त्वतो नाकलयसि। जानासि चेत् कथं तां परित्यज्यान्यत्रासक्तो भवसि। अकारो वासुदेवः स्यात्। वचःस्थले च वः प्रोक्त इत्येकाक्षरद्वयम्। यमकश्लेषचित्रेषु वबयोर्डलयोर्न भिदित्यनुशासनाद्भेदाभावेनाचार्थान्तरवर्णनम्। यद्वा। सितत्वतो बहुत्वाद्धेतोः। अर्थात् तथा प्रेम्णा बहुत्वादवस्त्रीकृतमात्मानं नाकलय। सा किल त्वां धनेनाप्यविष्यतीति व्यङ्ग्यम्। यद्वा। सितत्वाद्धेतो बन्धविशेषबहुलात् स्त्रीकृतमात्मानं नाकलय।

---

१ + सेतिहासाः C

भङ्गुराः प्रवादा [१]बभूवुः। तथाहि। अवस्त्रीकृतमात्मानं

अव तत्समीपे गच्छ। यद्वा। नाकस्येवाकाशस्येव लयः संश्लेषो यस्य। निरर्थकसम्बन्ध इत्यर्थः। आकाशे त्रिदिवे नाक इत्यमरः। यद्वा। केन सुखेन लयो विलासस्तेन सिता बद्धस्तत्सम्बोधनम्। ततोऽन्यस्य स्त्री न। सर्वनाम्नोरन्यार्थकयोस्तत्तोरखिलक्तस्य पञ्चम्यन्तस्य प्रयोगो यथायथं बोध्यः।

यथा पतिव्रतया ना स्वपतिः सेव्यत एवं पराङ्गना विदग्धेन सेवनीयेत्यर्थः।

कृतं मिथ्याभाषणादिना हिंसितमात्मानमवद्योतय। सत्यभाषणात् तेजोऽभिवृद्धिर्जायत इति तदाचरेति व्यङ्ग्यम्। कृञ् हिंसायाम्।

यद्वा। के जले लयो विलासस्तेन सितावगत जलक्रीडाविहित। सितस्त्ववसिते बद्धे सिता शर्करेति हेमः।

सितः समासे धवले विबन्धज्ञातयोरपि।

इति विश्वप्रकाशः। यद्वा। नाके स्वर्गे लयो विलासो येषां ते नाकलया देवास्तद्वत् सितोऽवगतः। यद्वा। अवस्त्रीकृतं लक्ष्मीहिंसितमात्मानं तत्त्वतो नाकलयसि पूर्वं तथैव धनदानादिना सर्वस्पृहणीयतामापादित इदानीं तामेवायासयसि। सा दरिद्रावस्था ते किं विस्मृतेति व्यङ्ग्यम्। कस्य जलस्य लयो विलासो नीचगमनरूपस्तेन सितावगत नीचगमनप्रसिद्ध। स्त्रीकृतं स्त्रीहिं-

[१] प्रब- C E F G

नाकलयसि तत्त्वतः कान्त प्रस्तर इव क्रूरोऽसि न चाकर्षक-

---

सितमात्मानमेव। यद्वा। अकारो वासुदेवस्तेन तुल्यमेव।
इवार्थे वः। अ व कृष्ण इव स्त्रीकृतं स्त्रीपर्याप्तमात्मानं तत्त्वतो
नाकलयसि। अन्याभिः सह क्रीडां करोषि चेत् कुरु परन्तु
मयाऽपि सह क्रीडां कुर्विति भावः। व वा यथा तथैवैवं साम्य
इत्यमरः। यद्वा। सितत्त्वतो धवलत्वाद्धेतोरव कृष्ण इव स्त्रीकृतं
स्त्रीपर्याप्तमात्मानं नाकलय। तदीयशरीरवर्ण एव त्वच्छरीरे
नास्ति कथं तदीयसामर्थ्यमिति भावः। यद्वा। येन यशसा
सितत्त्वं तस्मात्। नाके स्वर्गे स्व इवेन्द्र इव स्त्रीकृतमात्मान-
मेव। यशो यः कथितः शिष्टैः। स्व इन्द्र इत्येकाक्षरकोशः।

अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ श्रुतौ श्रुतौ।
प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे॥

स्वाम्यर्थेऽवगमे कामे कृताविति कविकल्पद्रुमः।

दूतीसंवादवाक्यैकव्याख्यादिग्दर्शिता मया।
ग्रन्थबाहुल्यभीतेन शेषमूह्यं स्वधियाधिकम्॥

हे कान्त कस्य सुखस्यान्तो यस्मात्। प्रस्तर इव क्रूरोऽसि
पाषाण इव कठिनोऽसि निष्ठुरहृदयोऽसि। तत्रापि न चाक-
र्षको यत्सम्बन्धात् प्रत्युप्तमपि लोहं निःसरति। अयस्कान्त-
मणिश्चुम्बको यत्सम्बन्धाल्लोहमुपगच्छति सूर्यकान्तो वा सूर्य-
कराभिमृष्टयच्छायासम्बन्धादिन्धनादावग्निरुत्पद्यते। द्रावको
यत्सम्बन्धाल्लोहं द्रवति। चन्द्रकरस्पर्शात् स्वयं द्रवति स चन्द्र-

चुम्बकद्रावकोऽप्येकोऽसि[1] भ्रामकोऽसि परं किमत धर्मार्थान्य-

---

कान्तो वा भ्रामको यत्सम्बन्धात्सोऽहं भ्रमति स गुरिया इति ख्यातः।

चुम्बको द्रावकश्चैवाकर्षको भ्रामकस्तथा।
एकद्वित्रिचतुःपञ्चषण्मुखाः सम्भवन्ति ते॥

इति लोहशास्त्रे। कामकलाकौशलेन यो नारीमाकर्षति स आकर्षकः। रतिकौशलेन यश्चुम्बति स चुम्बकः। ओषधिविशेषयोगेन कुचादिमर्दनेन वा यः कठिनकामिनीं द्रावयति स द्रावकः। एतेषु नैकोऽसि। परं केवलं भ्रामकोऽसि। अन्यासक्तो योऽन्यनारीं भ्रामयति प्रतारयति स भ्रामकः। कस्य प्रस्तुरसोऽस्तीत्यर्थः यस्मात् कान्तः। आकर्षको धनुराकर्षकः। चुम्बकः सैन्यप्रवेशकः। द्रावकः परसैन्यविद्रावकः। तेष्वेकः श्रेष्ठोऽसि। भ्रामकोऽश्वादीनामसेः खड्गस्य भ्रामको वा कान्त मनोहर न प्रस्तर इव क्रूरोऽसि। प्रार्थितः सन्नपराधान् क्षमसे। आकर्षकचुम्बकद्रावका इषवो बाणा यस्य स कामस्तद्वदेकोऽद्वितीयोऽसि। भ्रामको नारीचेतसाम्। एकोऽद्वितीये श्रेष्ठे च। क्रूरो कठिननिर्दयौ। इत्युभयत्र विश्वः।

धर्मार्थमन्येन केनचिद्धर्मिष्ठेन राज्ञा नागरिकादिना वा प्रयुक्त आतरं विनाकिञ्चनजनान् परपारं नयेति प्रेरितः क्षेपणिको नाविक इव मुधा वृथा वाहिततरं वारि जलं येन।

---

१ -कोऽप्यसि C H इति अस० च मर० च।

मण्डलाग्रतो निर्वृतिमुपेत्य तिष्ठति। स खलु वीरः प्रति-

---

स सदाचरितत्वच्छव्यवहारः। या अगच्छति ता अगो म-
ण्डलस्याग्रो मण्डलाग्रः कुक्कुटा रिपुभूता मण्डलाग्रो रिपुमण्ड-
लाग्रस्तस्मा रतो रिपुमण्डलाग्रतो निर्वृतिं सुखमुपेत्य तिष्ठति।
अक अग कुटिलायां गतौ। यद्वा। निर्गता वृतिरावरणं यस्यास्तां
निरावरणां वेश्याम्। वीर निन्दायां रिपुमण्डलाग्रतः शत्रु-
खड्गान्निर्वृतिं सुखम्। शत्रुणा खड्गे धृते स्वयं सुखी तिष्ठती-
त्यर्थः। निर्वृतिं खेदादेरावरणं वा। भयादुपेत्य। शृङ्गारे
सत्त्वेन गुणेन सदाचरितो यो रिपुमण्डलाग्रतः शत्रुमण्डलाग्रतो
निर्वृतिं जीविकाम्। यद्वा। रिपुमण्डलाग्रतः सपत्नीसमूहाग्रतः।
सप्तम्यर्थे तसिः। निर्गता वृतिरन्यपुरुषान्तरवरणेच्छा यस्याः।
सतत्वी तामुपेत्य तिष्ठति। वर्तमानसामीप्य इति लट्। पूर्व-
मन्याः सपत्नीरनादृत्य त्वं तस्यामेवानुरक्तः स्थित इदानीं
तथैव कर्तव्यं त्वयेति स्तौति।

कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्।

इत्यमरः। मण्डलं द्वेषसङ्घयोरिति विश्वः।

निर्वृतिस्तु सुखे जीव्येऽभयेऽक्षयेऽपि च।

इति धरणिः।

अपराह्ण। स खलु वीरः शूरो यः प्रतिपक्षस्य शत्रोः
सम्प्रहारतः कुञ्जरान् गजाञ्जयति। यद्वा। विशेषेणेरयति वीन्
पक्षिणो वेरयतीति वीरः। सम्प्रहारतो गमनात्। सम्प्रहारो

पक्षस्य यः सम्प्रहारतः कुञ्जरान् नयति। धृतोद्भकरवालसञ्च-

---

रणे गताविति हेमः। ईर गतौ कम्पने च। यद्वा। विशिष्टा इरा मद्यं यस्य। मद्यप इति यावत्।

इरा भूमिसुरावारिभारतीषु प्रयुज्यते।

कुञ्जरोऽनेकपे केशे धातक्यामपि कुञ्जरा॥

वीरस्तु सुभटे श्रेष्ठे वीरो भल्लान्तरेऽपि च॥

इति विश्वप्रकाशस्त्रिषु।

प्रतिगतः पक्षं प्रतिपक्षो बलं तस्य। यद्वा। प्रतिपक्षस्य शत्रुः सहायस्य वा।

पक्षो मासार्धके गेहपार्श्वे साध्यविरोधयोः।

केशादेः परतो वृन्दे बले सखिसहाययोः॥

पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुञ्जरे।

इति विश्वप्रकाशः। यद्वा। विशेषेण ई कामश्रीं लक्ष्मीं वा रात्यादत्ते वीरः।

ईकारः कथ्यते कामो लक्ष्मीरीकार उच्यते।

इत्येकाक्षरकोशः।

सम्यक् प्रकृष्टोऽत्युत्कृष्टो हारो मुक्तादिमाला ताम् सम्प्रहारतः। द्वितीयार्थे तसिः। कुञ्जरान् केशान् नयति। हारो मुक्तावली युद्ध इति विश्वप्रकाशः। यद्वा। सम्प्रहारतोऽत्युत्कृष्टरतियुद्धे। सप्तम्यर्थे तसिः।

योऽपि परमकाष्ठ एव सम्पतन् महापदं विग्रहेण लभते।

---

खलु स्यात् प्रतिषेधेऽपि निश्चयेऽप्यवधारणे।

इति विश्वः।

अन्याह। धृत उद्‌करेण विशालहस्तेन बालानां कुचकेशानां संश्रयो येन। यद्वा। धृत उदर्भराम् करवालस्य कृपाणस्य संश्रयो येन। यद्वा। ऊर्ध्वपर्यन्तौ करावूद्‌करौ ताभ्यां धृतो बालानां प्रतिपक्षशत्रुलोकेशानां संश्रयो येन। आजानुबाहुरित्यर्थः। यद्वा। धृत उद्‌करेण भूरिराजभागेन बालानामज्ञानां संश्रयो येन। यद्वा। धृत उद्‌करेणोद्‌कराणां वा बालानां संश्रयो येन। यद्वा। धृत उद्‌करवालानां संश्रयः। सुरतबन्धे।

विग्रहेण शरीरेण कलहेन युद्धेन परिग्रहणेन वा महापदं महास्थानं महापत्तिं वा परं श्रेष्ठं परमत्यर्थं वाऽकाण्डेऽनवसरे परमकाष्ठ उत्कृष्टावसरे वा।

विग्रहो युधि विस्तारे प्रविभागशरीरयोः।

इति हेमः।

अपराह्न। राजसे रजोगुणविकारे सत्यनरहितो मनुष्याननुकूलस्त्वं न राजसे रहितो मत्सख्या जनैर्वा त्यक्तः। रह त्यागे। क्तः। यद्वा। राजसेन प्रभावेणापि रजोगुणेन रहितो नरहितो मनुष्यहितो न राजसे ध्रुवम्। यद्वा। राजस रजोगुणप्रधान इनरहितोऽप्रभुस्त्वं न राजसे यतो रहितः प्रभुणा त्यक्तः। नरेषु हितो राजसे ध्रुवम्।

राजसेन रहितो राजसे न रहितो ध्रुवं विशारदा विशारदा-
ऽविशदा विशदात्मनीनमहिमा महिमानरक्षणक्षमा-

---

ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्।

इति विश्वप्रकाशः। यमकालङ्कारः।

अन्याह। विगता शारदा सरस्वती यस्य तत्सम्बोधनम्। धृष्टो वा चतुरो वा। विशारदो बुधे धृष्ट इति विश्वप्रकाशः। स्त्रीविशेषणं वा। विशिष्टः शारदोऽभ्रो मेघस्तद्वद्विशदा निर्मलान्तःकरणा।

विशन् प्रविष्टो भवन् आत्मनीन आत्महितो महिमा महत्त्वं यस्याः। मह उत्सवो येषां ते महिनस्तेषां मानरक्षणे सम्मानपालने क्षमा। क्षमातिलक पृथ्वीभूषण शान्तितिलक वहिः शान्तिप्रदर्शक तव मनसि धीरता बुद्धिरता सर्वकालिकीत्यर्थः। अधीरता कातरता। वचस्सभूतताऽसत्यता भुवि पृथिव्यां तता विस्तृता। यद्वा। अकारो वासुदेवस्तस्माद्भूतस्तत्ता कन्दर्पता। यद्वा। अक्षेण व्यवहारेण मा लक्ष्मीः मा तिलकमस्य। यद्वा। अक्षस्य विभीतकस्य मा लक्ष्मीस्तत्तिलक।

अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः।

आत्मजे पाशके चाक्षमिति विश्वप्रकाशः।

विशेषेण शारं हिंसां ददातीति विशारदः। शॄञ् हिंसायाम्। अञ्। महिष्मानन्ति प्राणन्ति ते महिमाना मानधनास्तेषां

निष्क्रधीरताधीरता मनसि भूतताभूतता वचसि साह सेन

---

रघुराघव हे धीर तादृशो धीरतास्तव मनसि तव वचसि भूतता सत्यता भूतता पृथ्वीप्रख्याता।

भूतं न्याये पिशाचादौ भूतं सत्योपमानयोः।

इति विश्वः। विशारदाभ्रविशदा विशिष्टशरन्मेघस्वच्छा। निष्क-पटहृदयेति यावत्। आत्मनि स्वविषये विशिष्टं शं श्रेयो यति विशदाः। दो अवखण्डने। इनस्य सूर्यस्य महिमा महत्त्वं यस्य तादृशस्त्वम्।

शं श्रेयसि शकारः स्याच्छिवे सौख्ये प्रकीर्तितः।

इत्येकाक्षरकोशः। शं धर्मे शास्तुशास्तरीति विश्वप्रकाशः। आत्मन्विश्वजनभोगोत्तरपदात् ख इति खः। आत्मनीने।

अपराह। सा मनस्वी त्वामाह। हे सेन सप्रभो परतस्त्व सा मनसापि नान्यमनुसरामीति प्रतिज्ञाविशिष्टाहम्। आह्सेन भवदीयेषद्धासेन कस्य सुखस्य मलाधारपात्री। मल मल्ल धारणे। पचाद्यच्। पराजिता कमला लक्ष्मीर्यस्याः सा कमलापराजिता। आहिताग्न्यादिः। अतएवापराजिता। अन्यस्त्रीभी रूपसुरत-कौशलादिभिरपराभूता। पराजितपराभूतावित्यमरः। यद्वा। आह्सेनेषद्धासेन अपराजिता एतदभिधाना देवी पराजिता पराभूता के मलमस्याः कमला शिरोमालिन्यविशिष्टा। सौम-न्तकर्मण्यनभिज्ञेति यावत्। तादृशी कमला लक्ष्मीः। यद्वा। साह्सेनाभिसरणरूपेण कमला लक्ष्मीस्तत्परा कमलापरा

साहसेनकमला कमलापराजितापराजिता सा त्वद्र्पणा [1]दर्पणाकारविमलाशया [2]शयाञ्जविनिर्जितकिसलया सलया-

---

लुब्धेति यावत्। जिता। यथा लुब्धा नाभिसरत्येवं प्रीत्या मत्स्यभिसरतीत्यर्थः।

ननु कुरूपा सा केनापि नाद्रियत इति सा स्वतो धावति न तत्र मन्मुखं हेतुरित्याह। आहसेन सा प्रसिद्धा कमला लक्ष्मीः पराजिता। मत्सख्येति शेषः।

सखीभावमाह। ला आदाने। लातीति ला न ला अला लुब्धा कं सुखमपराजिता त्वया पूर्वं प्रोत्साहनाद्दीपिता। राजृ दीप्तौ। यद्वा। साहसेनाहसेन युक्तेति शेषः। सा मत्सखी कमला वरस्त्री। आकमला बहुलक्ष्मीका। कमला तु वरस्त्रियामिति शाश्वतः। हस इति स्वनहसोर्वेत्यप्प्रत्ययान्तः। यद्वा। यथा परा कमला पराजिता सा मत्सख्याह। आहसेनेषद्धासयुक्तेन त्वया जितमात्मानमाहेत्यर्थः। कीदृशी सेना सप्रभुः कमला लक्ष्मीर्यस्यास्तस्या लक्ष्मीदानभोगादियुक्ता न लक्षामिकलक्ष्मीवद्दानभोगहीनेत्यर्थः।

इतराह। त्वय्यर्पणमस्यास्त्वदर्पणा दर्पणाकारो मुकुराकार आशयो यस्याः। शयाञ्जेन करकमलेन विनिर्जितकिसलया जितनवपल्लवा। अङ्गुलिविभ्रमेणाङ्गुलिभ्रमणेन सलया सविलासा।

लयो विलासे संश्लेषे साम्ये तौर्यत्रिकस्य च।

---

१ द० -विमलाविमलाशया D २ शयाञ्जनि- A B C D F

कुलविभ्रमेण विभ्रमेण प्रतिगवाक्षशलाकाविवरं विलोकयन्ती

---

इति विश्वप्रकाशः।

गवाक्षेषु शलाका जन्तूनामागमनप्रतिषेधार्थं प्रयुक्ताः काष्ठादिनिर्मितास्तासां विवरं विवरं प्रति प्रतिगवाक्षशलाकाविवरं विलोकयन्ती पश्यन्ती विलोकवत् पक्षिजनवदाचरन्ती विलोकयन्ती। यथा पक्षिणः पञ्जरशलाकान्तरेण पश्यन्त्येवं सापि भवानागतो न वेति गवाक्षशलाकान्तरेण पश्यति। गवाक्षशलाकान्तरदर्शनं परकीयालक्षोतकम्।

शलाका शल्लकाकापि मदनसारिकाशल्ययोः शरे।

छत्रे पञ्जरकाष्ठे चेति विश्वप्रकाशः। उक्तं च।

अनूढा स्वानुरक्ता स्त्री परकीया निगद्यते।
उत्तमाधमभेदाभ्यां द्विविधैषा पराङ्गना॥
अलक्षितानुरागैषा स्वीयाकल्पोत्तमा भवेत्।
तद्भिन्ना त्वधमा ज्ञेया तद्भेदा लक्षितादिकाः॥
परोढाकन्यकाभेदाद्द्विविधा द्विविधा मता।
विदग्धानुदिता चैषानुशयानाथ लक्षिता॥
गुप्ता च कुलटा चेति षट्प्रकारोदिता बुधैः।

इत्यलङ्कृते रसरत्नहारे। यत्तु। अप्रकटपरपुरुषानुरागा परकीयेति तन्न। कुलटाया असङ्ग्रहात्। उपालम्भपक्षे नञ्समासः। विभ्रमेण भ्रमणेन।

शलाका शल्लकाकापि मदनसारिकाशल्ययोः शरे।

विलोकयन्ती त्वया विना साविना सायमनुभवन्ती दुःखानि जीवनायक जीवनाय क इह[1] नाश्रयन्ति[2] सुभगम् । अन्या-

---

ञ्चने पञ्जरकाष्ठे चेति विश्वप्रकाशः ।

इतराह । अविना मेषेण त्वया विना सायं सायङ्काले दुःखानि त्वद्वियोगदुःखान्यनुभवन्ती तिष्ठति । तामनुसरेति व्यङ्ग्यम् । धीरेयम् ।

प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ।

इति रसरत्नहारः । अविना रक्षकेण त्वया विना दुःखान्यनुभवन्त्यतः सायं साद्मनुभवन्ती तिष्ठति । अव रक्षणादौ । सर्वधातुभ्य इन्निरितीन्निः । षो अन्तकर्मणि । आदेच इत्यात्वम् । आतो युगिति युक् ।

अन्याह । जीवनायक प्राणहारक जीवनाय जलार्थम् जलाहरणार्थमित्यर्थः । सुभगं शोभनपद्मं त्वां के नाश्रयन्ति ।

भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु ।

पद्मवीर्यप्रयत्नेच्छाश्रीधर्मरविमुक्तिषु ॥

इति विश्वप्रकाशः । अधीरोक्तिरियम् । अधीरा परुषोक्तिरिति रसरत्नहारः । शृङ्गारे । जीवनायक मत्सखीप्राणेश जीवनाय प्राणधारणार्थं के जनाः सुभगमैश्वर्ययुक्तं त्वां नाश्रयन्ति । क इति पुंलिङ्गनिर्देशो यदि पुरुषाः स्वप्राणधारणार्थं त्वामाश्रयन्ति तर्हि स्त्रीणां का वार्तेति द्योतयितुम् ।

---

१ + त्वां E G H २ -न्ति C G

स्तावदासतां दासतां पुरतोऽहमेव भजामि। मैव्यतोऽमैव्यतो-

अपराद्द। अन्यया मत्तस्त्वतिरिक्तयास्ताः क्षिप्तस्तत्सम्बोधनम्। अतएवावद तस्यां क्रोधादसम्भाषक। असतां परपीडानभिज्ञानां पुरोऽग्रे दासतां दास्यमहमेव भजामि। अतोऽमैव्यतोऽमित्रभावात्। मैत्र्यस्तु वदो वदावदो वक्तेत्यमरः। यद्वा। अन्यैस्त्वदपेक्षयान्यैः शृङ्गारिभिस्तत्सम्बन्धिभिर्वास्ता क्षिप्ता तया सह वदति तत्सम्बोधनम्। यद्वा। अन्यास्ता अतएव दास पुरोऽहमेव भजामीति तां दासतां पूर्वस्वीकृतां मत्सख्या दासतामव रक्ष। यद्वा। अन्यास्तेनान्यनारीपरित्यक्तेनावदाभाषणकर्त्री।

निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः।

इत्यहं सतामेव दासतां भजामीति। यद्वा। अवनमावो घञ्। अन्यास्तानामावदा रक्षणकर्त्री। अशरणशरणेति यावत्। प्रीतिप्रदा वा तृप्तिप्रदा वा। यद्वा। अप्रशस्तो मस्तन्त्रोऽस्यास्ति। अभि सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः। हापितः क्वासि हे सुभ्रु इत्यत्र सम्बुद्धिलिङ्गस्तो यथा रामविरहातिशयपोषकस्तथा सर्वथाप्रयोजकत्वद्योतनाय नपुंसकप्रयोगः। अनाः प्राणिनस्तेभ्यो हिताऽन्या। तस्मै हितमिति यत्। सतामावदा। त्वयेति शेषः। अस्ता तिरस्कृता। इदानीं दासतां भज। कीदृशी पुरो नगर्या मेव स्वस्मीव। छन्तेर्विप्। हे अदाच्छेदक। अत्रापि पूर्ववत्। मः शिवचन्द्रम वेधाः। इकारश्छेदने मत इत्युभयत्रैकाक्षरकोशः। अन्या इतरास्तावदासतां तिष्ठन्तु। अहमेव पुरो दास्यं भजामि।

ऽस्तु अञ्जसारतः सारतः किमपि कन्दर्पकं दर्पकं न तनोषि विशेषतोऽशेषतः क्षितमेव मरणं शठधियां[1] शोधन यशोधन-

---

अपराध। अञ्जसा शैघ्र्येण सारतो बलात्। सा तन्वी तव प्रियेति शेषः। त्वं रतः सक्तः किमपि दर्पकं न तनोषि। किमुत्कृष्टं दर्पकं दर्पं न तनोषि। विशेषतो विशेषात्। अशेषतो निःशेषात्। मरणं क्षितमेव। माधुर्यं गुणः।

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू।

अवृत्तिर्लघुवृत्तिर्वा तन्माधुर्यमिति स्मृतम्॥

इति काव्यप्रकाशे।

परा प्राय। हे शठधियां अज्ञबुद्धीनां शोधन यशसा अधन बुद्धिशुद्धियशोहीन। उत्कटमसौख्यमचिर येषु तैः कटाक्षैः प्रेमहार्यं सुखहारणीय या त्वां क्रूरकटाक्षैरामन्त्रयति तस्यास्त्वं वश्य इत्यर्थः। अतएवामहार्यायाश्रय महानीचाश्रय। अस्तं त्यक्तं दास्यं यथा तथा आविर्भूतं दास्यं यस्मिन् तत्सम्बोधनम्। परितो जनान् स्वप्रियचक्रजनानस्यति। तथा कामंधारिणा हतप्रशस्तया तत्सम्बोधनम्। आवर्जके। शठधियां अज्ञबुद्धीनां शोधन प्रियचक्र। अतो यशोधन प्रेमहार्यं केवलप्रणयवश्य। अतो महार्याश्रयात्युन्नताभिप्राय। तदा मत्सख्या मानसमये। उत्कटाक्षैः कटाक्षैर्भवत्सम्बन्धिभिः। अस्या अस्य-

---

१ -यायशो- D इति वर० च।

[1]प्रेमचार्यामचार्याभयोत्कटाचैः कटाचैराविर्भूतदास्यास्तदा-स्याः परिजनाः कमलाकृतिनारीणां कमलाकृतिनारीणां

---

अस्याः परिजना अस्मदादय आविर्भूतदास्याः। यस्मिन् काले तथा भावः अतो भवता च क्रूरकटाचैः सा दृष्टा तदारभ्यै-वास्मदादयस्तत्परिजना भवत्सेवकाः संवृत्ताः। एवं च चिर-सेवकानामस्मदादीनां प्रार्थनया सा सुसम्पन्नमनोरथा सम्पा-दयितव्येत्यर्थः। यद्वा। उत्कटव्यवहारैः। यद्वा। उत्कटभा-भिर्वात्कटार्थैः। यद्वा। तदा भवत्कोपकाले उत्कटाचैः क्रूरैः कटाचैरित्यादि पूर्ववत्। अत्र पचे सर्वथा तवैव दोष इत्यर्थः।

काचिदाह। भवतारीणां अचूर्णां कमलाकृतिनारीणां ल-क्ष्म्याकृतिर्योषां कमलाकृति मुखं न मलिनितमिति न। यद्वा। कृतिना भवतारीणां अचूर्णां कमला लक्ष्मीर्न मलिनिता न मलिनीकृता। कमलाकृति पद्माकारं नारीणामर्थाच्छनुना-रीणां मुखं न मलिनितमिति काकुः। नपुंसकमनपुंसकेनेति नपुंसकैकशेषः। कृतो कुशल इत्यपीत्यमरः। यद्वा। कमलया लक्ष्म्या कृती तेन भवतारीणां नारीणां कमलाकृति मुखं न मलिनितम्। काकुः पूर्ववत्। यद्वा। कमलाकृतिम् पद्माकार निर्लेपत्वेन साम्यं लक्ष्मीकुशलेति वा सम्बोधनम्। नारीणामा चाकल्येनातिकठिनतया वैदग्ध्येन वा कोऽपि नास्मान् द्रावयितुं

---

१ प्रेमचार्यासमोत्क- A B प्रेमचार्यासमासमोत्क- C D F H

भवता मुखं [1]च मलिनितं विश्वस्य विश्वस्य व्यवस्था [2]समा-
साद्यसमासाद्यमनेककालसङ्गतसङ्गा तनुषे[3] [4]तनुषेकमनङ्ग-
मनङ्गपुष्पेषुपुष्पेषु रुजा तरसा जातरसा मन्दाक्षमन्दा क्षणं

---

पटुरिति प्रचुतापन्नानां नारीणां कमलाकृति कमलरम्यं मुखं न मलिनितमिति काकुः। प्रकाकुरुपालम्भपचः।

काचिदाह। विश्वस्य सर्वस्य विश्वस्य विश्वासं कृत्वा सा तव प्रिया समा सलज्जीका विगतावस्था मर्यादा वयो वा यस्याः। आदितोऽसमा विषमा त्वं तु साद्यमासाद्ययोग्यं तनुषे शरीराय। तनुः स्यात् तनुषा सार्धमिति शब्दभेदप्रकाशः। क्रमव्यत्ययेनार्जने तनुषे आसेवकं विश्वस्य सर्वस्य जगतो मध्ये त्वया व्यवस्था समासादि असमं विषमसमस्यसमासा हे असमास इति वा आद्यं प्रथममतनोः कामस्य सेकं कं सुखम्।

पुष्पं विकाशे कुसुमे स्त्रीणां च रजसि स्मृतम्।

इति विश्वः।

अनङ्गमशरीरं पुष्पेषुपुष्पेषु कामशरेषु तरसा वेगेन जातरसा मन्दाक्षं मन्देक्षणं भ्रमन्ती मुह्यति। आवर्जने। हे ऽनङ्ग साक्षात् काम। अनङ्गमसम्बद्धं प्रति पुष्पेषुपुष्पेषुरुजा कामबाणरुजा तरसा वेगेन जातरसोत्पन्नानुरागा मन्दाक्षमन्दा लज्जामन्थरा क्षणं भ्रमन्ती मुह्यति।

---

१—च C E F G २ स० -कालं स- D इति नर० च। ३ -ततनुषे A B D H ४ तनुषेकमनङ्गपु- A B H

भ्रमन्ती मुह्यति। कामधुराधरेण कामधुराधरेण मुक्तारजोराजिविशेषकेण[1] विशेषकेण मुखेन्दुना तव हृदि लग्ना[2]

---

धुराया धरो धुराधरः। भागुरिमते टाप्। कामं धुराधरत्वेनात्यन्तभारवाहकेनाधरेण नीचेन रजोराजिभिर्विशेषकं तिलकं यस्य तेन त्वया। विशेषस्य हावादेः शेषो यत्र तेन मुखेन्दुनोपलक्षिता मधुरा रम्या मूर्तिः का स्त्री मुग्धा न कापीत्यर्थः। एतादृशेनैतादृशो बहुश उपभुक्ताः। समालङ्कारः।

समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः।

इति लक्षणात्। आवर्जने। कामस्य धूः कामधुरा। ऋक्पूरिति समासान्तः। तस्या अधरत्वेन मधुरः सुधाधिकस्वादोऽधरोष्ठो यस्य तेन। मुक्तारजोराजिभिर्विशेषकं तिलकं यत्र तेन। एतन्निर्माणावसरे बहवो मुखेन्दवो निर्मितास्तेषु रम्यत्वादस्यैव प्रयोगः कृतो विधिनेति विशेषेण शेषो यस्य तेन मुखेन्दुनोपलक्षिता का कापि स्त्री वर्तते। शेषो यदत्र मत्सखीं ज्ञात्वा न चलति चेत् सामान्यरूपेणाभिधायैनं नेष्यामीति छलप्रधानाया इयमुक्तिः।

तमालपत्रतिलकचित्रकाणि विशेषकम्।

इत्यमरः।

इतराह। तव हृदि लग्ना कापि वर्तते। अस्मदिव आक-

---

१ + मुक्तारजोराजि- C २ लोना H

मृदिमाकरेण करेण स्वेदबिन्दुपयोधरेण पयोधरेण[1] वक्षः-फलकाञ्चनेन जितानाविलकाञ्चनेन कामदारुण मदारुण-नेत्रास्मरमयं रमयन्तं त्वामदयं मदयन्ती परमकमितारं

---

रसेन दापीत्वं व्यङ्ग्यम्। करेण स्वेदबिन्दुभिः पयोधरो जलध-रस्तेन वक्षःफलकेऽञ्चनं गमनं यस्य। पतितत्वादित्यर्थः। तेन पयोधरेणोपलक्षितानाविलकाञ्चनेन जिता। श्यामवर्णत्वा-दित्यर्थः। आवर्जने मृदिम्न आकरेण करेण स्वेदबिन्दुपयो-धरेण वक्षःफलकस्याञ्चनं पूजनं रम्यत्वं येन। जितमनाविलं स्वच्छं काञ्चनं येन। गौरत्वादिति भावः। तेन पयोधरेणो-पलक्षिता तव हृदि लग्ना कापि वर्तत इति पृच्छति। अस्ति चेत् तामनुसरेति व्यङ्ग्यम्।

अकर्मकठिनौ हस्तौ पादौ चाध्वनि कोमलौ।

इति सामुद्रिकलक्षणं तु पुरुषविषयम्। अञ्चु गतिपूजनयोः। काञ्चनं चम्पके हेम्नीति विश्वः।

अन्याह। कामेनाभिलाषेण दारुण मदारुणनेत्र। अस्मर-मयमदयं रमयन्तं त्वाम्। परित्यज्येति शेषः। मदयन्ती मत्ता का परमत्यर्थमकं दुःखमितारं प्राप्तवन्तं परं भिन्नमकमितार-मकामुकम्। अकं पापे च रोगे चेति विश्वः। आवर्जने कामेन मदेन दारुण कठिननारीणामप्ययत्नेन द्रावक। मदयन्ती सीधु-सेवनात्। अतएवारुणनेत्र। कामदाभिलाषप्रद। स्मरमयमदयं

---

१-पयोधरेण A D E इति नर० च।

परमकमितारं वाञ्छति हारिणा चारिणा स्तनकुम्भेन हारिणाचिरदर्पिहारिणा चक्षुषा हारिणा[1]। अनन्तरं दुग्धसमुद्रप्रविष्टमिव स्फटिकगृहगर्भप्रविष्टमिव[2] [3]मेघोदरोपनिमग्नसुख-

---

रमयन्तं परमकमितारं परमकामुकं परमकं परमसुखमितारं मां वाञ्छति। कामुके कमितानुक इत्यमरः। अत्रापि यमकालङ्कारः।

पराह। हारिणाऽन्योऽन्यं युद्धकृता। पतितत्वादिति भावः। चारिणा अनागां हेयतासम्पादनेनेत्यर्थः। एतादृशेन स्तनकुम्भेनोपलक्षिता। हे गर्ते ह्वलति हारि। ह्वल गतौ। अच इः। हारिणा गर्तगतेनात एवाचिरदर्पिहारिणा प्रेक्षकनेत्राभिलाषहारकेण। कुत्सितत्वादित्यर्थः। चक्षुषा चोपलक्षितां त्वामाह। एतादृग्दोषविशिष्टां त्वामेतादृशमाहेत्यर्थः। आवर्जने। हारिणाचिरदर्पिहारिणा हरिणसम्बन्धिनेत्रकान्तिहारिणा चक्षुषोपलक्षिता हारिणा हारवता हारिणा करिकलभकुम्भानुकारित्वाद्रम्येणेत्यर्थः। स्तनकुम्भेनोपलक्षिता। अनेन मत्सखी युवतिः सुन्दरावयवा प्रसाधिता चेति सुगन्धि जाम्बूनदम्। हा गर्तेऽपि निगद्यत इत्येकाक्षरकोशः।

निरीक्ष्य लोकव्यवहारजालं
रीतिं कवीनामथ कोशजालम्।

---

१ + च A B २ -बिम्बमिव C D G H ३ मेघो॰ -सुखनिवसम- H

मनुभवदिव[1] जगदामुमुदे। क्रमेण च विघटमानदलपुट-[2]कुमुदकाननकोशमकरन्दबिन्दुसन्दोहमुदितमुग्धमधुकर-कुलकलकलमुखरितदिगन्ते[3] [4]चन्द्रिकापानभरालसचकोर-कामिनीभिरभिनन्दितागमने[5] [6]सुरतभरपरिश्रमखिन्नपुलि-

---

व्याख्या मयेयं रचिता महेश-
पादारविन्दे प्रणिधाय चेतः॥

चन्द्रिकाव्याप्तिं वर्णयन्ति। अनन्तरं चन्द्रोदयोत्तरं दुग्धार्णवप्रविष्टमिव स्फटिकगृहेषु प्रविष्टमिव श्वेतद्वीपमिवासाद्य सुखमनुभवदिव जगद्भुवनमा साकल्येन मुमुदे। मुद हर्षे।

क्रमेण कन्दर्पकेतुर्वासवदत्ताजनकनगरमयासीदित्यन्वयः। विघटमानं विकसद्दलपुटं पत्रपुटं यस्य तादृक् कुमुदकाननं तस्य कोशेषु मध्यभागेषु मकरन्दबिन्दुसन्दोहः पुष्परसबिन्दुसमुदायस्तेषु मुदितं हृष्टं मधुकरकुलं तस्य कलरुतेन मुखरितदिगन्ते। चन्द्रिका ज्योत्स्ना तस्याः पानभरेणालसचकोरकामिनीभिरभिनन्दितागमने स्तुत्यागमने। चन्द्रिका कौमुदी ज्योत्स्नेत्यमरः।

सुरतभरपरिश्रमखिन्नाः पुलिन्दराजस्य म्लेच्छजातिविशेषराजस्य सुन्दर्यस्तासां स्वेदकणिकापहारिणि सायन्तने

---

१ -दिवेन्दुना E २ कु॰ -मकरन्दसन्दोहमुग्ध- A B F H कु॰ -मकरन्दबिन्दुसन्दोहसान्द्रनिष्यन्दास्वादमुदित- C कु॰ -मकरन्दबिन्दुसन्दोहलुब्धमुग्ध- G ३ इति कर॰। -न्ते A B C E F G ४ च॰ -लसतरलचकोर- D ५ -नाभिगमने C F G ६ सुरतभरखिन्न- A B C D F H

न्द्राजसुन्दरीस्वेदजलकणिकापहारिणि[1] प्रयाति[2] स्नायमाने तनीयसि निशानिःश्वासनिभे[3] नभस्वति कन्दर्पकेतुतमालिकामकरन्दसहायो वासवदत्ताजनकनगरमयासीत्।

अथ कटकैकदेशविरचिताभ्रंलिहशिखरेण सुधाधवलेनैकान्तरनिविष्टकनकमुक्तामरकतपद्मरागशकलेन वासवदत्ता-

---

सन्ध्याकालिके। सायंचिरमित्यादिना ष्टुः। तनीयसि स्वल्पेऽतएव निशानिःश्वासनिभे नभस्वति वायौ प्रयाति सति तमालिकामकरन्दो सहायो यस्य सः। या प्रापणे। यमरमेति सगिटौ।

अथ वासवदत्ताभवनं ददर्शेत्यन्वयः। कटकैकदेशे राजधान्येकदेशे विरचितमभ्रंलिहं शिखरं यस्य तेन। वहाभ्रे लिह इति खश्।

कटकं वलये सानौ राजधानीनितम्बयोः।

इति विश्वः। सुधा चूर्णी तया धवलेन। एकान्तरं निविष्टानि कनकं सुवर्णं मुक्ता मरकतं गारुत्मतं पद्मराग एषां शकलानि यत्र।

वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव शालवलयेन प्राकारवलयेनानुगतम्। प्राकारो वरणः शाल इत्यमरः।

---

१ + सखेदहारिणि D २ प्रयाति A B C D F G प्रवहति H इति क्रम० च। ३ -सदृशे C D F G

[1]दर्शनार्थमवस्थितदेवतागणेनेव[2] शालवलयेन [3]परिगतम-निलोल्लासिताभिर्नभस्तरुमञ्जरीभिरिव तर्जयन्तीभिरिव गग-नार्णवश्रियं[4] पताकाभिरुपशोभमानं कनकशिलापट्टाङ्गण-प्रसृताभिः [5]कर्पूरकुङ्कुमचन्दनैलालवङ्गगन्धोदकपरिमलवा-[6]हिनीभिर्वाहिनीभिरम्लानतटस्फाटिकपट्टसुखनिषण्णनिद्राय-

---

अनिलोल्लासिताभिर्नभस्तरुमञ्जरीभिर्गगनार्णवश्रियं तर्जय-न्तीभिरिव पताकाभिरुपशोभितम्। पताका वैजयन्ती स्या-दित्यमरः।

कनकशिलापट्टाङ्गणेषु प्रसृताभिः। अलयन्त्रविशेषैरिति भावः। फोव्वारा इति चहर इति वा भाषायाम्। पाठङ्गणेति परसार इति भाषायां प्रसिद्धः।

कर्पूरकुङ्कुमचन्दनैलालवङ्गानां गन्धो यत्र तादृगुदकं तत्प-रिमलसन्दोहवाहिनीभिर्वाहिनीभिर्नदीभिः। अम्लानास्तटस्फाटि-कपट्टेषु सुखेन निषण्णा अतएव निद्रायमाणाः प्रासादपारा-वता यासु। निश्चलमम्लाने निश्चले च निद्रा तस्यां सुखो-पवेशनं हेतुरिति कारणमालालङ्कारः।

---

१ द॰ -र्शमास्थि- A B C D F २ + सन्निहितशालभञ्जिकानिवहेन D ३ प॰ -ल्लासितनभ- A B F G प॰ -स्तबकुसुममञ्ज- B C ४ मगनपुरश्रियं A B C D F G गगनश्रियं H ५ क॰ -गन्धोत्कटप- C क॰ -करसपरि- A B C F ६ हि॰ -भिरम्लानस्फाटिकतटनिकटपट्टसु- A B E F हि॰ -भिस्तटनिकटस्फा-टिकपट्टसु- C हि॰ -भिस्तटनिकटस्फाटिकशिलापट्टसु- D

[1]माणप्रासादपारावताभिः [2]प्रभ्रश्यत्तटनिकटविटपिकुसुम-
[3]स्तबकितसलिलाभिरनवरतमज्जदुन्मज्जन्मदयुवतिजनघनज-
[4]घनस्फालनोच्छलच्छीकरनिकरस्नपितवेदिकाभिः कर्पूरपूर-
[5]विरचितपुलिनतटनिविष्टनिनदानुमीयमानराजहंसीभिर्विक-

---

प्रभ्रश्यद्भिस्तटविटपिकुसुमैस्तीरवृक्षपुष्पैः स्तबकितं सञ्जातस्तबकं सलिलं यासाम्।

अनवरतमज्जदुन्मज्जन्मदयुवतिजनस्य घनजघनास्फालनेनोच्छलच्छीकरनिकरेण स्नपितार्द्रीकृता वेदिका वितर्दिः प्राङ्गणादौ कृतमुपवेशनं स्थानं याभिर्यासां वा ताभिः। स्याद्वितर्दिस्तु वेदिकेत्यमरः।

कर्पूरपूरेण विरचितं यत् पुलिनं तस्य तटे समीपदेशे निविष्टा उपविष्टा निनदैर्वासितैरनुमीयमाना राजहंस्यो यासु ताभिः। भाक्तोऽत्र पुलिनप्रयोगः। प्रमाणालङ्कारेष्वनुमानालङ्कारः। कर्पूरपुलिनवर्णनेन सम्पत्तेरपरिमेयत्ववर्णनात्। उदात्तालङ्कारोऽप्यत्र। तथाच दण्डी।

---

१ माणाभ्रातप्रा- D इति अम० च मर० च। माणभ्रेतप्रा- G माणाभ्रातमुग्धप्रा- H माणप्रासादश्वेतपा- B C २ प्र० -विटप- C F ३ स्त० -मज्जयुव- A B C F H स्त० -दुन्मदयुव- D E G स्त० -तिजघन- B D E F G स्त० — -घन- A B C D E F G H ४ घनस्थलास्फा- B C घ० -नोच्छुसितशी- A B C E F H घ० -नोच्छलितशी- D G घ० -स्नापिततीरवे- A D G ५ वि० -पुलिनतलनि- A C D F G वि० -निषण्णनि- A B C D F G H वि० -हंसमिथुनकलकलमुखरिताभिर्वि- D

[1]वनीलोत्पलकाननदर्शिताकाण्डचक्रवाकमिथुनशङ्काभिर्युवतिभिरिव [2]सुपयोधराभिः सुग्रीवयुद्धकलाभिरिव कीलालस्नपितकुम्भकर्णाभिः सागरकूलभूमिभिरिव सुन्दरीपादपरा-

---

आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्।
उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः।

इति।

विकचमित्यादि। रक्तोत्पलपाठपक्षे रात्रौ विकासासम्भवात्। नीलोत्पलपाठपक्षे चक्रवाकानामेव तिमिरशङ्कावर्णनानुपयोगादुपेक्ष्यम्।

युवतिभिरिव तरुणीभिरिव। यूनस्तिरिति तिः। सुपयोधराभिः शोभनस्तनीभिः। पक्षे धरन्तीति धराः पचाद्यच्। पयसो जलस्य धरास्ताभिः। तरुणी युवतिः समे। स्त्रीस्तनाब्दौ पयोधराविति द्वयोरमरः।

सुग्रीवयुद्धकलाभिरिव कीलालेन रक्तेन स्नपितः कुम्भकर्णो राक्षसो याभिः। पक्षे कीलालेन पयसा स्नपितः कुम्भस्य कलशस्य कर्णोऽग्रो याभिः। शोणितेऽम्भसि कीलालमिति पक्षद्वयेऽमरः।

सागरस्य कूलभूमिभिरिव तीरभूमिभिरिव सुन्दरीपा-

---

१ चरक्तो- E च० -वाकचक्रति- A F च० -वाकमिथुनति- E G २ चम्रत-धारिपयो- D

गन्धवल्लाभिर्नैकनृपतिचित्तवृत्तिभिरिव [1]कुल्यापमानकारिणी-[2]भिरनेकतराभिरुपशोभितं [3]शिखरगतमुक्ताजालव्याजेन पुरयुवतिजनदर्शनकुतूहलागतं तारागणमिवोद्वहद्भिरुपान्त-

---

रूपाणां रागैः प्रबलाभिः। पक्षे सुन्दरीणां पादपरागैश्चर-णरेणुभिः प्रबलाभिः।

सुन्दरी तदभिसारीभिद्वेः स्त्री रुचिरेऽन्यवत्।

नवोऽचिरप्राप्तराज्यपदो नृपतिस्तच्चित्तवृत्तिभिरिव। कु-त्सायां कुत्से साधोस्तच साधुरिति यत्। तस्यापमानकारिणीभिः। पित्रादेरमात्यादयः शिशुत्वादव्यलादा नैनमतिमनुत इति तेषामपमानः। पक्षे कुल्यानां कृत्रिमाल्पसरितामपमानकारि-णीभिः। कुल्याल्पा कृत्रिमा सरिदित्यमरः। अनेकतराभिर्व-ल्लीभिरुपशोभितम्।

शिखरगतानां पक्षिप्रवेशवारणार्थमुपरिबद्धानां मुक्ताजा-लानां मुक्तामयजालकानां व्याजेन पुरयुवतिजनस्य कुतूहलं कौतुकं तद्दर्शनार्थमागतं तारागणमिवोद्वहद्भिः। कुतुकं च कुतूहलम्।

आलं समूह आनायो गवाक्षजालकावपि।

इत्युभयत्रामरः।

---

१ नद्याकुल्य- C H २ रनेकाकाराभिर्मञ्जरीभिरुप- A B रनेकाकाराभिरुप- G H ३ शि० -मुक्ताफलजाला- B

निलीनाभिः काञ्चनशलाकामिमुद्वहन्तीभिः शिखिसंहतिभिरुल्लासितैः प्रासादैरुपशोभितं क्वचिदनवरतदह्यमान[1]कृष्णागुरुधूमपटलैर्दर्शिताकालजलदोदयं[2] [3]क्वचिदति[4]गम्भीरमुरजरवाकृतसानन्दनर्तितनीलकण्ठं सायन्तनसमयमिव पतितलोकलोचनं जनकयज्ञस्थानमिव [5]दारोत्सुक-

---

उपान्ते निलीनाभिर्नितरां लीनाभिर्निश्चलतया स्थिताभिरतएव काञ्चनशलाकातिमुद्वहन्तीभिः शिखिसंहतिभिर्मयूरयूथैरुल्लासितैः प्रासादैरुपशोभितम् ।

क्वचिदनवरतदह्यमानकालागुरुधूमपटलैर्दर्शितमकाले अजलदानां मेघानामुदयो येन यत्र वा । अतएव क्वचिदति गम्भीरमुरजरवाकृताः सानन्दं नर्तिता नीलकण्ठा बर्हिणो यत्र। रात्रौ मयूरनृत्यवर्णनं तिर्यञ्चोऽपि सर्वकालं सुखिनो मनुष्याणां तु का कथेति ध्वनयितुम् । मृदङ्गा मुरजाः । मयूरो बर्हिणो बर्ही नीलकण्ठ इति द्वयोरमरः ।

सायन्तनसमयमिव पतितः लोकलोचनः सूर्यो यत्र । किरणमालिविलोचनहेतय इति हारावली । पक्षे पतितानि सौन्दर्यावलोकनार्थं लोकानां लोचनानि यत्र ।

---

१ छ० -गुरुधूपप- A B D F H छ० -गुरुधूपधूमप- C E G २ -होद्यानं D ३ क्वचिद्गभीर- A B C D E F H ४ म० -रवाकृतमन्दमन्दनर्तितसानन्दनी- A B C G म० -रजव्याहृतिरसज्ञी- D म० -रवव्याकृतसानन्दमदननर्तितनी- E म० -वाकृतसानन्दनी- F H ५ इति ब्रम० च। दारोत्सुकित- A B C D F G H इति नर० च ।

रामं [1]मानुष्यकमिवाभिनन्दितसुरतं[2] निधानमिव कौतुकस्य वासमिव शृङ्गारस्य [3]कुलगृहमिव [4]विभ्रमस्य सङ्केतस्थान-

---

जनस्थानमिव हारेषु सीतायामुत्सुको रामो राघवो यत्र। पक्षे हारयतीति हारः कन्दर्पस्तेनोत्सुका रामाः स्त्रियो यत्र। सुन्दरी रमणी रामेत्यमरः।

मानुष्यकमिव मनुष्यसमूह इवाभिनन्दिता श्लाघाविषयी-कृता सुरता देवत्वं येन। पक्षेऽभिनन्दितं सुरतं मैथुनं यत्र।

कौतुकस्य निधानगृहं भाण्डागारमिव शृङ्गारस्य वास-गृहमिव।

पुंसः स्त्रियां स्त्रियाः पुंसि सम्भोगं प्रति या स्पृहा।
स शृङ्गार इति ख्यातः क्रीडादि रसकारणम्॥

इत्युक्तमन्यत्र।

विभ्रमस्य विलासस्य कुलगृहमुत्पत्तिस्थानम्।

कामोत्सुक्यकृताकारं रूपयौवनसम्पदा।
अनवस्थितचेष्टत्वं विभ्रमः परिकीर्तितः॥

इति भरतः।

अवनन्दनस्य कार्तिकेयस्येव प्रभावो यस्य सः।

---

१ मानुषमिव- A B C E F G H २ + कान्तारमिवानेकव्यालोपशोभितं D
३ कुलूचलम- D ४ विश्रामस्य G

मिव सौन्दर्यस्य वासवदत्ताभवनं भवनन्दनप्रभावो ददर्श।
द्रवसि द्रवसिद्धितो निगलिते[१] चपला चपलायते किमेषा

---

इत्यन्योन्यप्रणयेन पेशला रम्याः प्रमदानामालापकथाः शृण्वन् कन्दर्पकेतुर्मकरन्देन समं विस्मयमाश्चर्यमकरोत्।

द्रवसिद्धितो नर्मसिद्धितः सार्वविभक्तिकस्तसिः। निगलिते लडयोरैक्यान्निगडिते द्रवसि द्रुगतौ। बद्धस्य गमनप्रयासं उपहासाय अफलत्वादिति काचिदुपहसति। यद्वा मया प्रेम्णा बद्धासि त्वं मां परित्यज्य यासीत्युपालम्भः। द्रवो विद्रवनर्मणोः। आसवे सरगत्योश्चेति हैमः। यद्वा निगलिते एतदभिधाने द्रवसिद्धितो द्रावकौषधिविशेषाद्द्रवसि।

यद्यप्यष्टगुणः स्मरो निगदितः पुंसोऽङ्गनानां सदा
नो याति द्रवतां तथापि झटिति व्यायामिता सङ्गमे।
तत् स्यात्क्षेपजसम्प्रयोगविधिना सङ्क्षेपतो द्रावणम्।

इति रन्तिदेवः। यथोक्तं द्रवसीति तां सचीकृत्यान्यां प्रत्याह।

एषा पुरोवर्तिनी चपला चपलाभिधाना किं चपलेव विद्युदिवाचरति। नाम्नैव गतार्थत्वादिति भावः। यद्वैषा चपला चञ्चला। किञ्चान्यच पलायते। इण् गतौ उपसर्गस्यायताविति लत्वं परारेफस्य। यद्वा चपलेव पिप्पलीवाचरति। इयमेवौषधिः। सर्वथा द्रवतीति भावः।

---

१ निगदिते A C D F

स्तवकस्तव कर्णतः पतितोऽयं सुरेखे सुरया [1]चिता सुरया-[1]चितश्रीस्त्वमसि मत्ता कलहे कलहेमकाञ्चीदामकणितैः स्मरमिवाह्वयसि मलये मलयेप्सितं[2] दृष्ट्वैवाधिगतासि कलिके

---

चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च।

इति विश्वप्रकाश इति दिक्।

हे सुरेखे तव कर्णतः स्तवकः पुष्पगुच्छोऽयं पतितः। त्वं न जानासि। मत्तासीत्युपहासः। स्याद्गुच्छकस्तु स्तवक इत्यमरः। एनामेवोपहसति सुरैर्देवैर्याचिता। अर्थाद्ब्रह्मण उचिता योग्या श्रीः सौन्दर्यश्रीर्यस्यास्तादृशी त्वम्। सुरया मदिरया चिता व्याप्ता तादृशी सती मत्तासि।

हे कलहे कलैर्हेमकाञ्चीदामकणितैः स्मरमाह्वयसीवाकारयसीव। पत्यतिरिक्तपुरुषाह्वानोत्प्रेक्षणमुपहासाय। एनामुपहसति। मलये तन्नामिके। मे शिवे लयो नाशो यस्य मलयः। कामस्तदीप्सितं हृद्यं दृष्ट्वैव दृष्ट्वैवाधिगतासि त्वं पुरुषं कटाक्षैरामन्त्रयसीति भावः। अभीष्टेऽभीप्सितं हृद्यमित्यमरः। यद्वा मः शिवो लयो गृहं यस्य मलयश्चन्द्रस्तस्येप्सितं हरिणस्तं दृष्ट्वैवाधिगतासि। मृगलोचनासीति भावः। मः शिवश्चन्द्रमा वेधा इत्यनेकार्थध्वनिमञ्जरी।

---

१ —चिता A B D F H २ चयोचि- A B D F H चिता श्री- A B C D E F G H ३ -प्सितं C

कलिकेतुमिमां मुखरां [१]मुञ्च मेखलां शृणुमः कलवल्गकीलितं मेखला मे खला न भवति त्वमेव मुखरतया मुखरतया च चपतेऽञ्च पतेदियमवन्तिसेना कुसुमोपचारे[२] मुग्धा तव कैतवकैरलं लवङ्गिके[३] वेपथुरेवाशयं व्यनक्ति वहतीव वतीरनङ्ग-

---

कलिके कले रतिकलहस्य केतुं ध्वजम्। यथा केतुना सेनादि द्योत्यते। एवमनया रतिकलहो द्योत्यत इति भावः। मुखरां वाचालां मेखलां काञ्चीं मुञ्च। त्यागे फलमाह। कलमव्यक्तमधुरं च तद्वल्गकीलितं तत् शृणुमः।

कलिः स्यात् कलहे शूरे कलिरन्त्ययुगे युधि।

इति विश्वप्रकाशः।

उत्तरयति। मे मम मेखला काञ्ची खला पिशुना न भवति। मुखेन प्रेष्ठेन रतं यातीति मुखरतयाः। यद्वा मुखेन वात्स्यायनायुक्तोपायेन रतं यातीति मुखरतयाः त्वमेव मुखरतया वाचालतया खला।

मुखमुपाये प्रारम्भे प्रेष्ठे निःसरणास्ययोः।

इति हैमः। पिशुनो दुर्जनः खल इत्यमरः।

काचिदाह। मुग्धेयमवन्तिसेना चपते लज्जतेऽच कुसुमोपचारे। पतेत्। सम्भावनायां लिङ्।

तां प्रत्याह। लवङ्गिके कैतवैरलं कैतवसाध्यं नास्तीत्यर्थः।

---

१ त्यज D इति नर० च। २ -रेषु A C D इति जग० च। ३ कलिङ्गिके A B C D F H इति जग० च नर० च।

खेदसे स्मरसायकानां तव वपुरलसं पिहितापि हिताय न उत्कलिकामहोर्मिर्वदने वद नेत्रपेयकान्तौ किमुपमानमि-

---

वेपथुरेव कम्प एव तवाशयं व्यनक्ति। सात्त्विकाविर्भावात् त्वमेव कम्पसे मां किं वृथा वदसीति भावः।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः।

अनङ्गलेखे तव वपुः कर्तृ स्मरसायकानां क्षतीर्हन्मानि। हन हिंसागत्योः क्विप्। वहतीव यतोऽलसम्।

उत्तरमाह। तेऽप्युत्कलिकामहोर्मिः पिहिता छन्ना हिताय। विरहस्यानाविष्कारादर्थात् ते हिताय कल्याणाय। यद्वोत्कलिकामहोर्मिः पिहितापि हितवदाचरति हितायते। यद्वोत्कलिकामहोर्मिः पिहितापि हि निश्चयेन तायते लोकोपहासात् त्वां पालयतीत्यर्थः। तायृ सन्तानपालनयोः। सन्तानः प्रबन्धः। यद्वा पिहिताप्युत्कलिकामहोर्मिः कर्मकर्तृ तायते स्वयमेव विस्तृता भवति। हिः प्रसिद्धौ। तनु विस्तारे। तनोतेर्यकीति विभाषात्वम्। यद्वोत्कलिकामहोर्मिः पिहितापि हिता वृद्धा। हि गतौ वृद्धौ च। अयते लोके गच्छति प्रसृता भवति। हि नेत्रैः पेया कान्तिरस्य तस्मिन् वदने मुखे किमिन्दुरुपमानमपि यातीति वद। पूर्वं त्वन्मुखमुपमानमिदानीमिन्दुरुपमानमपि यातीति सम्भावनम्। मुखे विरहातिशयात् पाण्डुत्वाधिक्यद्योतनाय।

न्दुरप्युपयाति[1] वसतीव सतीशते तव हृदि कोऽपि शतधा शतधारसारा वाचस्तवानुभूताः कुन्तलिके[2] करकाकरकाल-[3]मेघखण्डतुलामयमुल्लसितोत्फुल्लमल्लिकामालभारी कुन्तल-कलापः तव याति[4] केरलिके[5] पुरगोपुरगोचराः श्रूयन्ते गीतध्वनयः[6] किमिव कल्पयसि[7] क्षणमीक्षणमीलनादपि चटुलं

---

उत्तरमाह । सतीनां शतमिव शतमस्यास्तत्सम्बोधनम् । तव हृदये कोऽपि वसतीव । शतधा शतप्रकारेण शतधारो-ऽशनिस्तत्साराः वज्रपरुषास्तव वाचोऽनुभूताः ।

शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ।

इत्यमरः ।

कुन्तलिके उल्लसितोत्फुल्लमल्लिकामालभारी तवायं कुन्तल-कलापः करकाणां वर्षोपलानामाकरो यः कालमेघखण्डः तस्य तुलां साम्यं याति प्राप्नोति । वर्षोपलस्तु करकेत्यमरः । माल-भारीत्यत्रेष्टकेषीकामालानामिति ह्रस्वः ।

पुरस्य गोपुरं द्वारं तद्गोचरा गतिध्वनयः श्रूयन्ते ।

गोपुरं द्वारि पूर्द्वारि कैवर्ते मस्तकेऽपि च ।

इति मेदिनी ।

किमिव कल्पयसि किंवा गायसि कथं वा कस्य कृते

---

१ + इव B C E F G २ केरलिके A B C D E F G ३ मे० -तुलामुपयात्ययमुल्ल- H ४ — तव याति H ५ कुन्तलिके A B C D E F G हे सुवल्लिके इति मर० । ६ किमवक- H ७ कल्पयसि A G

चटुलमपटं सखीजनमायासयसि मुरलिके[1] स्तनता स्तनताडनेषु यत् सौख्यं न लब्धं[2] स्मरता स्मरतापमोदनं[3] दयितेन दयितेन विमुक्तासि[4] किं मुह्यसि महतो महतो दयितो[5] दयितः

---

वेति किं कथयसि सर्वं स्पष्टतयैव ज्ञायत इति तदर्थमेवेत्युपहासः।

हे मुरलिके चपलं कामाध्वनोरत्यन्तसंयोगे द्वितीया। दूरगमीलनाद्दृष्टिमीलनाच्चटुलं चञ्चलं कार्येऽनक्षम्। चटुलमपटमपि प्रियवाक्यालसमपि सखीजनमायासयसि। त्वमपि विरहवेदनया मूर्छिताऽस्मान् वेदयसीति भावः।

दयितेनाभीष्टेन स्तनता भणितं कुर्वता सङ्केतार्थं पद्मादिग्रहणं कुर्वता वा स्तनमण्डलेषु सुरते चन्द्रकलानुरोधप्राप्तेषु। यत् स्मरतापनोदनं स्मरतापनाशकं सौख्यं लब्धं तत् स्मरतापि दयितेन पत्या विमुक्तासि। दयितः स्वामिकान्तयोरिति धरणिः। एतादृशस्तादृशेन मुक्ताऽसीति को वेद तवापराधमिति ध्वनिः। अतएव वदति किं मुह्यसि युक्तमेव कृतं पत्येत्यभिप्रायः। यद्वा समाश्वासयति किं मुह्यसि स त्वद्गुणासक्तस्त्वां न त्यक्ष्यति।

पूर्वं वर्णितमपि गुणं तत्प्रत्ययार्थं पुनर्वर्णयति। महतो

---

१ मुरले A C F २ लब्धं D E G ३ तद्- C E F G ४ वियुक्ता D इति नर० च। ५ — दयितो B D G

स्मरति स्म रतिप्रियं तव कौशलं नवनिशानखराणां नखराणां
व्रणः स्मरजन्यां स्म रजन्यां कुरुते न कुरुते रुजं[1] किं ते
लोचनाभ्यां लोचनाभ्यां प्रीणिताखिलजनेक्षणाद्भ्रः क्षणाद्भ्रः

---

महीयसो महतस्तद्गतिरूपान् महोत्सवाद्भुतमोहतमः। इतो
यया कयाचिद्गतविधानरूपो मोहो यस्य सः। ततोऽतिशये
तमप्। दयितः कान्तो दयितः पतिः। रतौ सुरते प्रियं
तव कौशलं स्मरति स्म स्मृतवान्। लट् स्म इति भूते
लट्।

हे कुरुते नवं निशानं तेजनं तेन खराणां नखराणां
नखानां व्रणः क्षतं स्मरस्य जनी वधू रतिस्तस्यां रतौ स्मरं
जनयतीति कर्मण्यण्। जनिवध्योश्चेति वृद्धिनिषेधः। ङीप्
तस्यां कामोद्दीपिकायां वा रजन्यां रात्रौ रुजं पीडां किं ते
न कुरुते स्म। पूर्ववल्लट्। शान तेजने। यद्वा स्मरेण जन्या
कामेनोत्पादिता तां रुजं चन्द्रकलानुरोधेन नखक्षताद्यो
नारीणां काममुद्दीपयन्तीति स्पष्टं कामतन्त्रे। भव्यगेयेति
साधुः।

जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्।
त्रिषूत्पाद्यजनिष्णोश्च।

इति विश्वमेदिन्यौ। स्त्री रुग् रुजा चोपताप इत्यमरः।

---

१ रुजां D इति अन० च।

किं[१] न पीयते प्रियसखि मदनमालिनि[२] बिम्बाधरसङ्गत्या सङ्ग-त्यागच्छया[३] विरागं[४] कुरु मधुमदारुणमालवीकपोलतलस-मानो लसमानो रक्तमण्डलतया लतया त्वया विशेषः कः कुर-

---

कापि मानिनीं प्रति छलेन वक्ति। हे मदनमालिनि लोचनाभ्यां प्रीणितोऽखिलजनानामीचण्डेशो ऽनेचण्डेशो येन सः। चण्डेशस्त्वन्द्रः किं न पीयते। विध्यलङ्कारः।

सिद्धस्यैव विधानं यत् तामाहुर्विध्यलङ्क्रियाम्।

लोचनयोर्लोचनविधानं चन्द्रदर्शनेन साफल्यद्योतनाय। चन्द्र-दर्शनादत्यद्भुतरागेयं स्वयमेव प्रियमनुनेष्यतीति भावः। यद्वा लोचनाभ्यां नेत्राभ्यां प्रीणिताखिलजनेचण्डेशः। चण्डः सुखदस्तथाविधश्चासौ स पतिः लोचनाभ्यां किं न पीयते रक्त-मण्डलतया लसमानोऽतएव मधुमदारुणमालवीकपोलतल-समानः। पक्षे रक्तमण्डलतयानुरक्तमण्डलतया लसमानः शो-भमानो मालवीकपोलतलसमानता रक्तमण्डलतया। बिम्ब एव बिम्बवद्वाधरस्तत्सङ्गत्या लतया त्वया को विशेषो न को-ऽपीत्यर्थः। अतः सङ्गत्यागेच्छया विरागं कुरु। यथा चण्डेशस्यौषधीशत्वेनाविरोधो लतयैवं नैकविधवाजीकरणाद्यौष-धीशत्वेन चण्डेशेन तवाप्यविरोध उचित इति भावः।

कुरङ्गिक इत्यादीनि सखिसम्बोधनानि। कुरङ्गशावकेभ्यो

---

१ कथं H २ मदनमालिनि B H इति जन० च नर० च। ३ -गे क्कापि C F G H ४ विरामं A B C D F H

ङ्गिके कल्पय कुरङ्गशावकेभ्यः शष्पाङ्कुरं किशोरिके कारय किशोरकेभ्यः प्रत्यवेक्षां तरलिके तरलय [1]कृष्णागुरुधूपपटलं कर्पूरिके पाण्डुरय कर्पूरधूलिभिः पयोधरभारं मातङ्गिके मानय मातङ्गशिशुयाचनां शशिलेखे लिख ललाटपट्टे शशिलेखां केतकिके सङ्केतय [2]केतकीमण्डपस्य दोहदं शकु-

---

हरिणशिशुभ्यः शष्पं बालतृणं कोमलं तदङ्कुरं कल्पयोत्पादय देहि। मृगे कुरङ्गवातायु। पृथुकः शावकः शिशुः। शष्पं बालतृणं घासः। अङ्कुरोऽभिनवोद्भिदि। इति चतुर्थ्वमरः।

किशोरकस्याश्वबालकस्य प्रत्यवेक्षामवेक्षणम्। बालः कि-शोर इत्यमरोऽश्वप्रकरणे। अवेक्षा प्रतिजागर इति च। तरलय विस्तारय।

काप्यतिविरहाकुलाह। कर्पूरिके कर्पूरधूलिभिः पयोध-रभारं पाण्डुरय।

अन्याह। मातङ्गिके मातङ्गशिशुयाचनां मानयाङ्गीकुरु। पुनः पुनः करचालनेन कुचोन्नत्यं कुम्भयोः प्रार्थयत इति भावः।

शशिलेखे ललाटपट्टे शशिलेखां लिख। स्मरबिभीषिका-र्थमिति भावः।

केतकिके केतकीमण्डपस्य दोहदं सङ्केतय जानीहि।

---

१ कृष्णागुरुसान्द्रधू- B C H कृष्णागुरुसान्द्रधूमप- D २ केतकीखण्डम- C

निके देहि क्रीडाशकुनिभ्य आहारं[1] मदनमञ्जरि मञ्जरय [2]सभामण्डपकदलीगृहं शृङ्गारमञ्जरि सङ्कल्पय शृङ्गाररचनानि[3] सञ्जीविके[4] [5]वितर [6]जीवञ्जीवकमिथुनाय [7]मरिचपल्लवं पल्लविके पल्लवय[8] कर्पूरधूलिभिः [9]कृत्रिमकेतकीकाननं सहकारमञ्जरि सञ्जनय सहकारसौरभं व्यजनवातेन मदनलेखे लिख मदनलेखं मलयानिलस्य

---

कलेविदर वा। दोहदो गर्भलक्षणे। अभिलाषे तथा गर्भ इति हैमः।

शकुनिके क्रीडाशकुनिभ्य आहारं देहि। व्यस्तोरेष्टावित्येलाभ्यासलोपौ।

मदनमञ्जरीत्यादि। शृङ्गारमञ्जरि शृङ्गाररचनानि सङ्कल्पयोत्पादय।

सञ्जीविके जीवञ्जीवकाय मरिचपल्लवं वितर देहि। जीवञ्जीवश्चकोरकः। मरिचं कोलकं कृष्णमित्यमरो द्वयोः।

पल्लविके कृत्रिमकेतकीकाननं कर्पूरधूलिभिः पल्लवय।

सहकारमञ्जरीति। मदनलेखे मलयानिलस्य मदनलेखं मदनावस्थासूचकं लेखं लिख।

---

१ -निकेभ्याहारं A B F -निभावकेभ्याहारं C G २ सलाम- D ३ -रचनां D E G ४ सञ्जीविनि C सञ्जीवनिके D H ५ सञ्जीवय A B C F G H ६ जीवञ्जीवमि- A B G H ७ मरीच- C D F G H मरीचि- इति मर०। ८ + कुङ्कुमपल्लवं कर्पूरिके पूरय C ९ कृ० -केतकका- C D F

मृणालिके देहि मृणालाङ्कुरं ‘राजहंसशावकेभ्यो[१] विलासवति विलासय मयूरकिशोरं तमालिके परिमलय मलयजरसेन भवनवाटं काञ्चनिके[३] विकिर कस्तूरीद्रवं[४] काञ्चनमण्डपिकायां[५] प्रवालिके सेचय घुसृणरसेन बालप्रवालकाननमित्यन्योन्यं प्रणयपेशलाः प्रमदानामालापकथाः शृण्वन् कन्दर्पकेतुर्मकरन्देन[६] सह[७] विस्मयमकरोत्।

मनस्यहो ‘[८]भवनानामतिशायि सौन्दर्यमहो शृङ्गारकलाकेलिकौशलं तथाह्ययं[९] [१०]तत्काललीलावहलविरलविमल-

---

मृणालिक इति। विलासवति मयूरकिशोरं विशेषेण लासय नर्तय। किशोरस्तरुणे श्रेष्ठ इति धरणिः।

तमालिके मलयजरसेन चन्दनरसेन भवनवाटं गृहमार्गं परिमलय। वाटः पथस्य मार्गस्येति त्रिकाण्डशेषः।

काञ्चनिके काञ्चनमण्डपिकायां कस्तूरीद्रवं विकिर विक्षिप। कॄ विक्षेपे।

प्रवालिके घुसृणरसेन कुङ्कुमरसेन प्रवालानां प्रकृष्टकेशानां काननं समूहस्तं सेचय।

---

१ मानसहंस- D २ -हंसेभ्यो A B -हंससारसेभ्यो C ३ काञ्चनमालिके A B ४ कस्तूरिकाद्रवं F G कस्तूरिकाद्रवरसं H ५ -लिकायां D ६ + तमालिकया च सह तद्भवनं प्रविश्य वि- D ७ + तद्भवनं प्रविश्य A ८ भुवनाति- A E G H भवनाति- B ९ + च D १० तत्कालस्फुरतली- D तत्कालकेलिली- E G H इति नर० च। न० -लीलाविदलितवि- D

[1]मालवीदञ्जनकान्तिकान्तिदन्तिदन्तघटितो मण्डपोऽस्मावपि [2]कनकशलाकाविनिर्मितयन्त्रपञ्जरसंयतः[3] क्रीडाशुक इत्यादि परिचिन्तयन् प्रविश्य व्याकरणेनेव सरक्तपादेन भारतेनेव सुपर्वणा रामायणेनेव सुन्दरकाण्डचारुणा

---

कुङ्कुमं पीतकावेरं घुसृणं कुसुमात्तकम्।

इति हारावली।

प्रविश्य वासवदत्तां ददर्शेत्यन्वयः।

व्याकरणेनेव पाणिनिप्रोक्ताष्टाध्यायीरूपेणेव तेन रक्तं रागादित्युपलक्षितः पादोऽध्यायतुरीयांशस्तत्सहितेन। पक्षे रक्तपादेन लोहितचरणेन सह सरक्तपादं तेन।

भारतेनेव सुपर्वणा शोभनपरिच्छेदयुतेन। पक्षे सुपर्वणा शोभनग्रन्थियुतेन। ग्रन्थिर्ना पर्वपरुषी इत्यमरः।

रामायणेनेव सुन्दरकाण्डेन चारुणा। पक्षे सुन्दरकाण्डवच्चारुणा।

काण्डं चावसरे बाणे नाले स्कन्धे च शाखिनाम्।

स्तम्बे रहसि गर्वे चेति धरणिः।

जङ्घायुगलेन विराजमानां विन्ध्यगिरिश्रियमिव सुनितम्बां

---

१ मा० -कान्तक- A B C D F G इति नर० च। मा० -कान्तिकोमलकुमुदिनीकान्तध- C २ कर्परम- C D F क० -कानि- E क० -काविनिर्मेमय- C क० -तोत्खातपञ्जर- D ३ इति अ४० च -पञ्जरतः A B E G + मञ्जुवाक् D

जङ्घायुगलेन विराजमानां छन्दोविचितिमिव भ्राजमानतनुमध्यां नक्षत्रविद्यामिव गणनीयहस्तश्रवणां न्यायस्थितिमिवोद्योतकरस्वरूपां[1] [2]बौद्धसङ्गतिमिवालङ्कारभूषितामुपनिष-

---

सुन्दरकटकाम् । कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः । पक्षे शोभनकटिपश्चाद्भागां पश्चान्नितम्बः स्त्रीकट्या इत्यमरः ।

छन्दोविचितिमिव भ्राजमाणतनुमध्याम् । तनुमध्याभिधं छन्दः । त्यौ स्तस्तनुमध्या । पक्षे भ्राजमाणं तनु मध्यं यस्याः ।

नक्षत्रविद्या ज्योतिःशास्त्रमिव गणनीयं हस्तो हस्तर्क्षं श्रवणं श्रवणर्क्षं च यत्र । पक्षे गणनीयमत्युत्कृष्टतया हस्तश्रवणं यस्याः ।

न्यायस्थितिमिवोद्योतकर आचार्यो न्यायवार्तिककृत् तत्स्वरूपां तदात्मिकाम् । विद्यातद्वतोरभेदविवक्षया त्रिमुनि व्याकरणमितिवत् । भेदविवक्षायां तु । उद्योतकरेण स्वरूपं यस्याः । उक्तानुक्तदुरुक्तचिन्ताकृता वार्तिककृता स्वरूपं यथा प्रतिपादितरूपम् । न तु खण्डितं भ्रष्टमित्यर्थः । पक्ष उद्योतकरं प्रकाशकरं स्वरूपं यस्याः । प्रकाशो द्योत आतप इत्यमरः ।

बौद्धसङ्गतिमिवालङ्कारो धर्मकीर्तिकृतो ग्रन्थविशेषस्तेन भूषिताम् । पक्षेऽलङ्कारो भूषणं तेन भूषिताम् ।

उपनिषदमिवैकमानन्दमद्वितीयं ब्रह्मानन्दमुद्योतयन्तीम् । तद्युक्ताम् ।

---

१ -स्वरूपां B G -सुरूपां F  २ बौद्धस्य स- C बौ॰ -संहति- A B बौ॰ -रशोभिताम्- A B F बौ॰ -रशोभनाम्- C G बौ॰ -रप्रसाधिकाम्- D बौ॰ -रभूरिभूषिताम्- E

[1]दृमिवानन्दात्मकमुद्योतयन्तीं द्विजकुलस्थितिमिव चारुच-रणां विन्ध्यगिरिश्रियमिव सुनितम्बां तारामिव गुरुकलत्र-तयोपशोभिता[2] शतकोटिमिव[3] मुष्टिग्राह्यतनुमध्या[4] प्रियङ्गु-श्यामासखीमिव प्रियदर्शना ब्रह्मदत्तमहिषीमिव सोमप्रभां

---

आनन्दो ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् ।

इति । पक्षे एकमुत्कृष्टमानन्दमाह्लादम् ।

द्विजकुलस्थितिमिव चारु सुन्दरं चरणमाचारो यस्या-स्ताम् । पक्षे चारु रम्यं चरणं यस्याः ।

चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च ।

तारामिव बृहस्पतिभार्यामिव गुरुकलत्रतयोपशोभिताम् । पक्षे बृहच्छ्रोणितयोपशोभिताम् । कलत्रं श्रोणिभार्ययोरित्य-मरः ।

शतकोटियष्टिमिव वज्रयष्टिमिव मुष्टिग्राह्यो मध्यो मध्य-देशो यस्याः । पक्षे मध्यमवलग्नं यस्याः । मध्यमं चावलग्नं च मध्योऽस्त्रीत्यमरः ।

प्रियङ्गुश्यामासखीमिव प्रियदर्शनां नन्नामिकाम् । पक्षे प्रियं दर्शनं यस्यास्ताम् ।

---

१ द॰ -न्दमेक- E H इति अग॰ च । २ इति अम॰ च मर॰ च । गुरुकल-त्रोपशोभितां A B C D E F G H ३ -टिमूर्तिमिव A ४ इति अम॰ च मर॰ च । -तनुमध्यां D E

दिग्गजकरेणुकामिवानुपमां वेलामिव तमालपत्त्रप्रसाधिता-मश्वतरकन्यामिव महाजवां वासवदत्तां ददर्श ।

अथ तां [1]प्रीतिविस्फारितेन चक्षुषा पिबतः कन्दर्पकेतोर्ज-हार चेतनां मूर्छावेगः । तमपि पश्यन्ती वासवदत्ता मुमूर्छ । अथ [2]मकरन्दसखीजनप्रयत्नलब्धसञ्ज्ञौ[3] तावेकासनमल-ञ्चक्रतुः ।

---

अभ्रदन्तमहिषीमिव सोमप्रभां तदभिधानाम् । पक्षे सोम-स्येव चन्द्रस्येव शोभा रम्या वा प्रभा यस्यास्ताम् । सोमो मनो-हरे चन्द्र इति विश्वः ।

दिग्गजः कुमुदस्तत्करेणुकामिवानुपमां तदाख्याम् ।

करिण्योऽभ्रमु; कपिला पिङ्गलाऽनुपमा क्रमात् ।

इत्यमरः । पक्षेऽनुपमामुपमारहिताम् ।

वेलामिव समुद्रतीरभूमिमिव तमालपत्त्रैः प्रसाधितामल-ङ्कृताम् । पक्षे तमालपत्त्रं तिलकं तेन प्रसाधिताम् । तमाल-पत्त्रं तिलकचित्रकाणीत्यमरः ।

अश्वतरकन्यामिव महाजवां तन्नामधेयाम् । पक्षे महेव वेगवदन्येनाजवां अन्यगमिम् ।

अथेति स्पष्टम् । मकरन्देन तत्कृतोपचारेण सखीजनेन तत्कृतोपचारेण यथाक्रमं लब्धसञ्ज्ञौ तौ वासवदत्ताकन्दर्प-केतू एकमभिन्नमासनमलञ्चक्रतुः ।

---

१ प्रीतिस्फा- C F २ म॰ -जनलब्ध- B E ३ + विहितमन्मथविवाहौ C

[1]ततो वासवदत्तायाः[2] प्राणेभ्योऽपि गरीयसी[3] सर्वविस्र-म्भपात्रं कलावती नाम कन्दर्पकेतुमुवाच। [4]आर्यपुत्र नायं [5]विस्रम्भकथाया[6] अवसरस्ततो[7] लघुतरमेवाभिधीयसे[8]। त्वत्कृते यानया वेदनानुभूता सा यदि नभः पत्रायते सागरो

---

तत इति। विस्रम्भपात्रं विश्वासस्थानम्। आर्यपुत्रेति।

आर्यपुत्रेति सम्बोध्यः पतिः पत्नीजनेन वा।

इति भरतः। त्वत्कृते त्वदर्थमनया वासवदत्तया या या वेदना अनुभूता सा सा यदि नभ आकाशः पत्रवदाचरति। उप-मानादाचार इति क्यङ्। पत्रायते। अतिवैपुल्यार्थमिदमुक्तम्। सागरो मेलानन्दायते मषीपात्रायते। गाम्भीर्यार्थं चेदम्। मेलानन्दो मषीपात्रमिति हारावली। लिपिकरो लेखकः। दिवाविभेति टः। ब्रह्मायते चिरजीवितार्थमिदम्। कथको वक्ता भुजङ्गराजायते भुजङ्गश्रेष्ठशेषायते। योगशास्त्रप्रणेतृत्वे-नान्तरभावाभिज्ञत्वार्थम्। शब्दशास्त्रार्णवपारावारीणत्वेन बहु-मुखत्वेन बहुधाभिप्रायाविष्कारकर्तृत्वार्थम्। वैद्यकशास्त्राचार्य-त्वेन विरहवेदनयास्या इयमवस्था न ज्वरादिजन्येति वक्तृतार्थं चेदम्। तथा चोक्तम्।

---

१ कथान्तरे A B २ + सखी H ३ + सखी D ४ आर्य राजपुत्र A B ५ समयो विस्रम्भकथानां ततो D ६ -कथानां E H ७ -रोऽतो E F ८ -यसे E F

मेलानन्दायते ब्रह्मायते लिपिकरो भुजगराजायते[1] [2]कथक- स्तदा किमपि[3] कथमप्यनेकैर्युगसहस्रैरभिलिख्यते[4] कथ्यते वा । त्वयापि[5] राज्यमुज्झितं[6] किं बहुना । आत्मा[7] सङ्कट [8]समारोपित [9]एव । एषास्मत्स्वामिदुहिता पित्रा [10]प्रभातप्रा-

---

योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य तु वैद्यकेन ।
योऽपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

इति । तदा कथमप्यनेकैर्युगसहस्रैः कथ्यतेऽभिलिख्यते वा । स- म्भावनालङ्कारः ।

सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।

इति लक्षणात् ।

त्वयेत्यादि । पाणिग्रहणं विवाहः । अनया वासवदत्तया- लोचितं चिन्तितं यदभ्यर्हितं लक्षणं जनं हुतवहे वह्नौ शयितव्यं प्रवेष्टव्यं महान् भागो भाग्यं यस्य तत्सम्बोधनम् । भागो भाग्यैकदेशयोरिति विश्वः । साम्प्रतं युक्तं प्रमाणमुत्त- रकर्तव्यतायामित्यर्थः ।

---

१ इति जग० च । भुजगपतिर्वा A B C F G भुजगपतिर्वा जायते D नाग- राजायते इति नर० । २ प्रक- A B ३ यदि A E ४ -रपि लिख्यते A B -र्वैलिख्यते D ५ + तदर्थं D ६ राष्ट्रमुत्त्सृष्टं C G ७ + च D + चापि E ८ निपातित H ९ — एव D H १० प्रभातायां D H इति जग० च ।

यायां रजन्यां [1]यौवनातिक्रान्तिदोषशङ्किना हठेन[2] विद्याधरचक्रवर्तिनो विजयकेतोः पुत्राय पुष्पकेतवे पाणिग्रहणेन दातव्येति[3]। अनयाप्यालोचितमद्य यदि तं[4] जनमादाय तमालिका नागच्छति तदावश्यमेव मया कृतवह्ने[5] प्रवितव्यमिति। तदस्याः[6] सुकृतवशेन महाभागेमां[7] [8]भूमिमनुप्राप्तः। तदत्र यत् साम्प्रतं तत्र भवानेव[9] प्रमाणमित्युक्त्वा विरराम।

अथ कन्दर्पकेतुर्भीतभीत [10]इव [11]सप्रश्रयमानन्दसागरलहरीभिराप्लुत इव भुवनत्रयराज्याभिषिक्त[12] इव वासव-

---

अथ सखीवाक्यश्रवणोत्तरमानन्दसागरलहरीभिराप्लुतः कन्दर्पकेतुर्भीतभीत इवाननुभूतपुरुषसङ्गेयं मा कदाचिदुद्विग्नाभूत् तथा सति रसभङ्गः स्यादिति सभय इवेत्यर्थः। सप्रश्रयं सविश्वासं वासवदत्तया सम्मन्त्र्य सख्याः कामचारानुज्ञां विधाय तया सह रतिं कृत्वेत्यर्थः। सम्पूर्वो मन्त्रिः कामचारानुज्ञार्थकः।

---

१ यौ० -क्रमदो- D H २ — हठेन E H ३ दातव्या B E F H + निश्चिता D ४ + समदृष्टं D ५ कृतवह्निमुखे H ६ इदानीं तस्याः E H ७ -भामतया भवानमनु- A B C F G -भाम इमां इति अम०। ८ भूमिमवतीर्णः H इति अम० च। ९ स्वमेव D १० — इव A B C E G H ११ सप्रश्रयम- A B C D F G H स० -न्दाप्लुतमा- A B C D F G १२ -भिषेकप्रीत D

दत्तया सह सम्मन्त्र्य मकरन्दं वार्तान्वेषणाय तत्रैव नगरे नियुज्य[1] भुजङ्गेनेव[2] सदागत्यभिमुखेन[3] मनोजवनाम्ना तुरगेण तया सह नगरान्निर्जगाम[4]।

क्रमेण च[5] [6]जाङ्गलकवलनाभिलाषमिलितनिःशङ्ककङ्कु-

---

वार्तान्वेषणाय मकरन्दं तत्रैव नगरे नियुज्य भुजङ्गेनेव सदागतिर्वायुस्तदभिमुखेन। पक्षे सदा सर्वदा गत्यभिमुखेन मनोजवनाम्ना तुरगेण तया वासवदत्तया सह नगरान्निर्जगाम। दुर्गगमनादौ स्त्रीणामनधिकारात्। अत्र सहयुक्तेऽप्रधाने इत्यप्रधाने तृतीया।

क्रमेण श्मशानवाटेन निमेषमात्रादनेकशतयोजनं गत्वा विन्ध्याटवीं विवेशेत्यन्वयः। जाङ्गलकवलनाभिलाषेण मांसग्रासाभिलाषेण मिलितं निःशङ्कं कङ्कानां पक्षिविशेषाणां कुलं तेन सङ्कुलेन।

जाङ्गलं जलदेशे स्याज्जाङ्गलं पिशितेऽपि च।

इति विश्वः।

---

१ नियोज्य C F G २ भुजगेनेव C D E F G H ३ + महोदधिपुलिनेनेव शुक्तिशोभितेन विन्ध्यविपिनेनेव श्रीदवल्लाञ्छितेन वत्सराजेनेव मानसगतिनारण्येनेव गण्डकशोभितेन वज्रेणेवेन्द्रायुधेन D ४ -न्निरगात् A B C F H इति नर० च। ५ + ततो D ६ मरज- D जङ्गल- इति अग०। नवजङ्गल- इति नर०। जा० -कङ्कसङ्कु- A B C G H

लसङ्कुलेनार्द्धदग्धचिताचक्रसिमसिमायमानविकटकटतृष्णा- चटुलकटपूतनोत्तालवेतालरवभीषणेन शूलशिखरारोपित- [१]शङ्कितवर्णकर्णनासिकच्छेदरुधिरपटलपतितभाङ्कारिभम्भरा- [२]लोभारभरितभूमिभागबीभत्सेन [३]कटाग्निदह्यमानापटुचट-

---

अर्धदग्धचिताचक्रे सिमसिमायमाम एतादृक् शब्दविशिष्टो विकटो भयानकं कटो मृतशरीरं तत्तृष्णाचटुलकटपूतना- नामुत्तालवेतालानां रवेण भीषणेन।

कटः समयबन्धेऽपि तृणेऽपि मृतकेऽपि च।

इति विश्वः।

शूलशिखरारोपितस्य शङ्कितवर्णस्य चोरस्य कर्णनासिक- मिति प्राण्यङ्गत्वादेकवद्भावः। तच्छेदरुधिरपटले कर्णनासि- कच्छेदनिर्गतरुधिरपटले पतिता भाङ्कारिभम्भराल्यो भा- ङ्कारोऽव्यक्तशब्दस्तद्युक्ता भम्भराल्यो मक्षिकास्ताभिर्भरितम्। इतजन्तो न तु क्तान्तः। पूरितं तादृग्भूमिभागेन बीभत्सेन।

चोरः शङ्कितवर्णस्य कुसुमाचः प्रकीर्तितः।

इत्युत्तरतन्त्रम्।

मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता।

---

१ श० -च्छेदगलद- D श० -पतितभङ्कारालिभ- C श० -पतितभयङ्कारिभ- D श० -पतितभाङ्कारभ- G श० -भम्भारा- E H इति जग० च। श० -भम्भवाली- इति नर०। २ लोसम्भार- D H ३ कृष्णाग्नि- इति जग०। क० -मानचटचट- करोटि- A क० -मानवकुलचढचटकरोटि- B क० -मानवकुलचटुलचटचट- करोटि- E G

चटच्चटत्करोटीटङ्कारभैरवरवेण[1] शूलपाणिनेव [2]कपालावलिभस्मशिवावकीर्णभूतभुजगावबद्धदेहेन पुरुषातिशयेनेवानेकमण्डलकृतसेवेन श्मशानवाटेन गत्वा निमेषमात्रादेवानेकशतयोजनं[3] प्रलयकालवेलामिव समुदितार्कसमूहां नाग-

---

इति हारावली।

कटाग्निस्तृणाग्निस्तेन दह्यमानापटुचटचटत्करोटिर्मनुष्यशिरोऽस्थि तस्याष्टङ्कारेण भैरवरवेण भयानकशब्दविशिष्टेन। शिरोऽस्थनि करोटिः स्त्रीत्यमरः।

शूलपाणिनेव शिवेनेव। कपालावलीत्यादि। शिवा गौरी। पक्षे क्रोष्ट्री।

पुरुषेष्वतिशयो यस्य स महाराजस्तेनेवानेकमण्डलं राष्ट्रम्। पक्षे श्वा तत्कृतसेवेन।

प्रलयकालवेलामिव समुदितोऽर्कसमूहः सूर्यसमूहो यस्याम्। पक्षेऽर्को वृक्षविशेषः। अर्काह्ववसुकास्फोत इत्यमरः। मदार इति भाषायाम्।

नागराजस्थितिमिवानन्तः शेषो मूलमादिकारणमस्याः। पक्षेऽनन्तानि मूलानि यस्याम्।

---

१ + विहतैस्वामुखमुखोज्ज्वलज्ज्वलनज्वालाजालजटिलेमान्स्तनस्तप्रोतकलितकपालकूटप्रलम्बिप्रालम्बिडामरडाकिनीगणहतरूपविभागकोलाहलेन। ईश्वराधिष्ठितविवाहमण्डलप्रतिसरपिशाचमिथुनप्रदक्षिणीक्रियमाणचिताचक्रामलेव D २ शूलकपाल- D कापाल- C ३ -नां B G H

[1]राजस्थितिमिवामन्त्रमूलां सुधर्मामिव स्वच्छन्दस्थितकौशिकां सत्पुरुषसेवामिव [2]बक्रश्रीफलाढ्यां भारतसमरभूमिमिव दूरप्ररूढार्जुनां[3] पुलोमकुलस्थितिमिव सहस्रनेत्रोचितेन्द्राणिकां [4]शूलपालचित्तवृत्तिमिव [5]फलितगणिकारिकां सञ्ज-

---

सुधर्मामिव देवसभामिव स्वच्छन्दं स्थितः कौशिक इन्द्रो यस्याम्। पक्षे कौशिक उलूकः।

सत्पुरुषसेवामिव बक्रश्रीयुक्तैः फलैराढ्याम्। पक्षे श्रीफलो बिल्वः।

बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि।

इत्यमरः।

भारतसमरभूमिमिव दूरप्ररूढोऽर्जुनः पार्थो यस्याम्। पक्षेऽर्जुनो वृक्षविशेषः। इन्द्रद्रुः ककुभोऽर्जुन इत्यमरः।

पुलोमकुलस्थितिमिव सहस्रनेत्रायेन्द्रायोचिता योग्येन्द्राणी शची यस्याम्। नद्यृतश्चेति कप्। पक्षे सहस्रनेत्रैः बहुमूलैरुचिता योग्येन्द्राणी शतावरी।

चारुधारा महेन्द्राणी शक्राणी जयवादिनी।

इति रभसः।

शूलपालो वेश्यापालो वैशिको वा तच्चित्तवृत्तिमिव फ-

---

१ राज्य- D २ — बक्र- A B C D F G H इति अग० च नर० च। सत्फल- C ३ -दभीमार्जुनां D ४ शूलापाल- इति अम० च नर० च। शूल० -लवृत्ति- A B F G H ५ कलित- A B F दर्शित- D

नसम्पदमिव [1]विकसिताशोकसरलपुन्नागां शिशुजनलीला-मिव कृतधात्रीधृतिं[2] कचिद्राघवचित्तवृत्तिमिव वैदेहीमयीं

---

सिता सफला वेशिकेभ्यो धनलाभात् सुरतसुखलाभाद्वा। गणिकानां वेश्यानामारिकागतिराकारणं वा यस्या स्ताम्। ऋ गतौ धात्वर्थनिर्देशे ण्वुल्। वृद्धिः। अर्थान्तरे आङ्पूर्वः। प्रत्ययस्थादितीकारः। पक्षे गणिकारिका वृक्षविशेषः।

श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका।

इत्यमरः। जयपर्ण इति प्रसिद्धः।

सज्जनसम्पदमिव विकसिता हृष्टा अशोकाः शोकरहिताः सरला उदाराः पुरुषा नागा इव। पुन्नागाः पुरुषश्रेष्ठा यस्या हेतोर्यस्यां वा ताम्।

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः।

सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥

इत्यमरः। पक्षे विकसिताः फुल्लाः अशोकाः सरलाः पुन्नागा यस्यां ताम्। पीतद्रुः सरलः पूतिकाष्ठम्।

पुन्नागः पुरुषस्तुङ्गः केसरो देववल्लभः।

इति द्वयोरमरः।

शिशुजनलीलामिव कृता धात्र्या उपमात्रा धृतिर्यस्याः। पक्षे धात्र्यामलकी। राघवो रामचन्द्रस्तच्चित्तवृत्तिमिव वैदेहीमयीं सीतामयीम्। पक्षे वैदेही पिप्पली।

---

१ वि० -शोकपिप्पलीसर- C २ -द्युतिं A C G -द्युतिं F

[1]क्वचित् क्षीरसमुद्रमथनवेलामिवोज्जृम्भमाणामृतां क्वचिन्नारायणशक्तिमिव[2] स्वच्छन्दापराजितां क्वचिद्वाल्मीकिसरस्वतीमिव दर्शितेक्ष्वाकुवंशां लङ्कामिव बहुपलाशसेवितां कुरुसेनामिवार्जुनशरनिकरपरिवारितां नारायणमूर्तिमिव [3]बहुरूपां

---

वैदेही रोचनाशीतावणिक्स्त्रीपिप्पलीष्वपि।

इति विश्वप्रकाशः।

क्वचित् क्षीरसमुद्रवेलामिवोज्जृम्भमाणममृतं यस्याम्। ताम्। पक्षेऽमृता गुडूची। गुडूची तन्त्रिकामृतेत्यमरः।

क्वचिन्नारायणशक्तिमिव स्वच्छन्दा स्ववशा अपराजिता पराजयरहिता ताम्। पक्षे स्वच्छन्दा निरर्गलप्रसृतापराजिता विष्णुक्रान्ता। विष्णुक्रान्तापराजितेत्यमरः।

वाल्मिकिसरस्वतीमिव दर्शित इक्ष्वाको राज्ञो वंशः सन्ततिर्यस्यां ताम्। पक्ष इक्ष्वाकुः कटुतुम्बी स्यादित्यमरः।

लङ्कामिव बहुपलाशै राक्षसैः सेविताम्। पक्षे पलाशो वृक्षः।

कुरुसेनामिवार्जुनशरनिकरैः परिवारिताम्। पक्षेऽर्जुनशरौ वृक्षतृणविशेषौ तयोर्निकरैः परिवारिताम्।

नारायणमूर्तिमिव बहुरूपामनेकस्वरूपाम्। पक्षे बहुरूपां बहुपशुकाम्। रूपं तु श्लोकशब्दयोः।

---

१ क्व० -लामिव स्वच्छन्दोज्जृ- A B C F G क्व० -लामिव विज्ट- H २ -यणमूर्तिमिव E ३ च्छतिब- E H इति जग० च।

सुग्रीवसेनामिव पनसचन्दनकुमुदनलसेवितामविधवामिव सिन्दूरतिलकभूषितां प्रवालाभरणां च कुरुसेनामिवोलूकद्रो-

---

पक्षावाकाशे सौन्दर्ये नाणके नाटकादिके।
अन्यावृत्तौ स्वभावेचेति हैमः।

सुग्रीव सेनामिव पनसचन्दनकुमुदैस्तत्तदभिधानैर्वानरैः सेविताम्। पक्षे पनसचन्दने वृक्षौ कुमुदं पुष्पम्।

पनसः कण्टकिफले कण्टके कपिरुग्भिदोः।
चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यात्।
कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ।
दैत्यान्तरे च दिङ्नागयोगयोरपि कीर्तितः॥
इति चिषु विश्वप्रकाशः।

अविधवामिव सिन्दूरस्य तिलकेन भूषिताम्। पक्षे सिन्दूरतिलकौ वृक्षविशेषौ।

सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके।
इतिविश्वः। तिलकः क्षुरकः श्रीमानित्यमरः। पत्ररचनादिवत्सिन्दूरधारणं प्रोषितभर्तृकाणामित्यविधवोक्तिः। प्रवालाः प्रकृष्टकेशाः विद्रुमा वाभरणं यस्यास्ताम्। पक्षे प्रवालाभरणां नवपल्लवाभरणाम्।

कुरुसेनामिवोलूकद्रोणशकुनिभिस्तदभिधानैर्वीरैः सनाथाम्। पक्ष उलूकः कौशिकः। द्रोणः काकः। शकुनिः पक्षिसामान्यम्। तैः सनाथाम्।

शकुनिसनाथां धार्तराष्ट्राम्बितां चाम्लानजातिभूषितामप्य-
कुलीनवंशां[1] दर्शिताभयामपि [2]विभीषणां सततहितपथ्यामपि

धार्तराष्ट्रैर्धृतराष्ट्रसुतपुत्रैरन्बिताम्। पक्षे धार्तराष्ट्राः प-
क्षिणः। धार्तराष्ट्राः सितेतरैरिति राजहंसप्रकरणेऽमरः।

अम्लानजातिभूषितामुत्तमजातिभूषितामपि न कुलीन उ-
त्तमकुलविशिष्टो वंशः सन्तानो यस्यास्तामिति विरोधः वंशो-
न्ववायः सन्तान इत्यमरः। यद्वा न कुलीनस्योत्तमकुलस्य वंशो
गर्वो यस्याः।

वंशो वेणौ कुले गर्वे पृष्ठाद्यवयवेऽपि च।

इति विश्वमेदिन्यौ। परिहारस्तु। अम्लानो महासहा जाति
र्मालती ताभ्यां भूषिताम्। न कौ लीना वंशा वेणवो यस्याम्।
अम्लानस्तु महासहा। सुमना मालती जातिरिति द्वयोरमरः।

दर्शितमभयं भयाभावो यया तादृश्यपि विशेषेण भीषय-
तीति विभीषणेति विरोधः। दर्शितमभयं नलदमभया हरी-
तकी वा यया विभीषणा जनसञ्चाररहित्यादिति परिहारः।
अभयं नलदं सेव्यम्। अभया त्वव्यथा पथ्येत्यमरो द्वयोः। सततं
हितं पथ्यं यस्यास्तामप्यसाध्यरोगभिन्नामपि प्रवृद्धगुल्मामिति
विरोधः। सततं हिता प्राप्ता पथ्या हरीतकी यया ताम्। हि
गतौ। क्तः। गत्यर्थत्वात् प्राप्त्यर्थः। प्रवृद्धा गुल्मा यस्याम्।
अप्रकाण्डे स्तम्बगुल्माविन्यमरः।

१ विवद्धवंशां A B C E F G H इति जग० च नर० च। भिवद्धवंशां D
२ — वि- D

प्रवृद्धगुल्मां षट्पदव्याकुलामपि द्विपदानाकुलां[१] द्विजकुल-भूषितामप्यकुलीनवंशां विन्ध्याटवीं [२]विवेश ।

अनन्तरं[३] तयोर्निद्रामादाय जगाम रजनी[४] । क्रमेण च कालकैवर्तेन तमिस्रानायं प्रक्षिप्य गगनमहासरसि सजीव-

---

षट्पदैर्भ्रमरैर्व्याप्तापि द्विपदैर्मनुष्यैरनाकुला । मनुष्ययेऽपि: । अगम्यत्वादिति भावः । यत् तु जगद्धरः षट्पदेषु पदद्वयसत्त्वा-वादिति भाव इति तच्चिन्त्यम् । गौण्युत्तरा संज्ञा पूर्वसंज्ञां बाधत इति विरोधानुत्थानात् । न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते । यद्वा द्विपानां हस्तिनां दानेन मदजलेनाव्याप्तां षट्-पदैर्भ्रमरैर्व्याप्ताम् ।

द्विजकुलेन भूषितामप्यकुलीनवंशाम् । ब्राह्मणकुलस्य स-र्वोत्कृष्टतया विरोधः । परिहारस्तु द्विजकुलैः पक्षिसमूहैर्वा भूषिताम् ।

अनन्तरं तयोर्वासवदत्ताकन्दर्पकेत्वोर्निद्रामादाय रजनी रात्रिर्जगाम । क्रमेणोक्तविशेषणयुक्तेषु तारादिषु कन्दर्पकेतु-र्वासवदत्तया सह लतागृहे सुष्वापेत्यन्वयः ।

कालेत्यादि । कैवर्तो धीवरः । आनायो जालम् । कैवर्ते दाशधीवरौ । आनायः पुंसि जालं स्यादित्यमरो द्वयोः ।

---

१ इति जग० च मर० च । द्विपदाकुलां A B E G द्विपदकुलाकुलां C F
२ प्रवि- A B C D F G ३ अथानन्तरे A B C D F G H इति जग० च मर० च । ४ तमस्विनी A B F यामिनी C G H निशा D

शफरीनिकर [1]इवापह्रियमाणे तारागणे रक्तांशुकपटे [2]विषमप्ररूढबिसलताअरयन्त्रकानुगतशतपत्रपुस्तकसनाथे मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकरसान्द्रमन्द्रमञ्जुस्वनैः[3] स्वधर्ममिव पठति विकचकमलाकरभिक्षौ कृषीवलेनेव कालेन तिमिरबीजेष्विव मधुकरेषु कुमुदकोषेषु [4]मधुरसक[5]र्दमितपरागपङ्केषु घनबध्यमानदलेषु[6] भ्रमरेषु [7]व्याजात्

---

रक्तांशव एव रक्तांशुकाः स्वार्थे कन्। त एव पटा यस्य तस्मिन्। रक्तांशुकं रक्तवस्त्रं पटो वसनं यस्येति च।

विषमप्ररूढबिसलतैव अरयन्त्रकं तालपत्रीयपुस्तकमध्यस्थरज्जुः तेनानुगतं शतपत्रं कुशेशयं तदेव पुस्तकं तेन सनाथे। अरत इति भाषायाम्।

मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकराणां मन्द्रैर्गम्भीरैर्मञ्जुस्वनैः स्वधर्मं पठतीव विकचे विगतकोशे विकसिते च कमलाकरभिक्षौ। मन्द्रस्तु गम्भीर इति स्वरप्रकरणेऽमरः। शतपत्रं कुशेशयमिति कमलप्रकरणे च।

कृषीवलेनेत्यादि। कृषीवलः कर्षकः। कर्षकश्च कृषीवल इत्यमरः।

---

१ इवावह्रि- A B G इव ह्रि- C २ वि॰ -यन्त्रिकानुपगत- D ३ इति जग॰ च। -रसान्द्रस्वनैः A B H -रमन्द्रस्वनैः C F ४ घरसक- C मकरन्दक- D H ५ र्दमितकेदारप- C र्दमितकेसरप- H ६ -दलपुटेषु A C ७ भ्रमरव्या- A

पङ्कजेषूप्यमानेषु [1]रजोमुर्मुरसनाथमधुकरपटलानुगतोद्द-
ण्डपुण्डरीकव्याजाद्धूपपटलमिव भगवते किरणमालिने प्रय-
च्छन्त्यां कमलिन्यां[2] [3]रजनीवधूकरतलद्वयोच्छलितपतत्प्रभा-
तमुसलाहतिक्षतान्तर उलूखल इव चन्द्रे [4]कण्डनकीर्णेष्विव
तण्डुलेषु तारागणेषु [5]मीलत्सु सन्ध्याताम्रमुखेनेव[6] वासर-
वानरेण नभस्तरुमारोहता शाखाभ्य इव कम्पिताभ्यो दिग्भ्यो
विकचप्रसून[7] इव तारागणे [8]चन्द्रमण्डले फले[9] च[10] निपत-

---

उप्यमानेषु टुवप बीजसन्ताने । रजोमुर्मुरेत्यादि । किरण-
मालिने सूर्याय । रजनीत्यादि । आहतिराघातः । क्षतान्तरे
खण्डितमध्यभागे नायं कलङ्कः । किन्तु मुसलाघातरन्ध्राकाश
एव दृश्यत इति द्योतनाय । क्षतान्तरलवर्णनम् । कण्डनेत्यादि ।
सन्ध्येवेत्यादि । सन्ध्येव प्रातःसन्ध्येवाताम्रं मुखं यस्य तादृशेन
वासरवानरेण । ताम्रमुखत्ववर्णनमन्यजातीयनिवृत्तये ।

स्फुरदरुण एव सूर्यसारथिरेव तरुणचूडा तया चाह्वदने
स्फुरत्यारुणया रक्तया तरुणचूडया चाह्वदने चक्रवाकौ
चरितुं भक्षणार्थम् । तारागण एव शालितण्डुलं तेन प्रबलं

---

१ र० -पटलधूमानु- A २ + तपस्विन्यां A C F ३ र० -करद्व- D H ४ प्रकण्डन- D क० -प्रकी- D H क० -विकी- E ५ निमी- D ६ -मुखरागेण B ७ + -निचय D ८ इन्दुम- D E इति अस० च । ९ -फलफले- D E H इति अस० च । १० इव C

ति[1] [2]तारागणशालितण्डुलशबलनभोऽङ्गणं स्फुरदरुणतरुण-[3]चूडाचारुवदने वासरकृकवाकौ चरितुमवतरति [4]मत्सङ्गति-प्रवृद्धो वारुणीसमागमात्[5] द्विजपतिरेष पतिष्यतीति हस-[6]न्त्यामिवाखण्डलककुभ्यरुणकेसरिकराघातनिहतान्धकारक-[7]रीन्द्ररुधिरधाराभिरिवोदयगिरिशिखरनिर्झरधौतधातुधा-राभिरिव [8]तुङ्गतुरङ्गखरखुरपुटपाटितपद्मरागच्छटाभिरिव

---

नभोङ्गणमवतरति। मेघो वर्षतीतिवत् प्रसिद्धेश्चरतेः कर्म नोपात्तम्।

मत्सङ्गतेः प्रवृद्ध एव। द्विजराजश्चन्द्रो वारुणी पश्चिमदिक्। तत्सङ्गमात् पतिष्यति। इति हसन्त्यामिवाखण्डलककुभि पूर्वदिशि। मया सह यदा सङ्गतस्तदोभयोः समवयस्कतासीत्। इदानीं त्वपराङ्गना उपभुक्तापि प्रवयस्यामीदृशमपि क्रान्तस्तया चान्तसारोऽत्यौत्सुक्यादापतिष्यतीति भावः। तथा च यत्सुखलोभात्त्वां परित्यज्य यातस्तत् सुखं नाप्स्यतीत्युपहासः। उक्तं चान्यत्र।

बालोपभुक्ता बलमादधाति
पतिं क्षयाङ्कं तरुणी करोति।

---

१ निपतिते D  २ तारामण्डल- A B C D F G H  ३ -चूडामणिच्छटाचा- D
४ मत्सङ्गमात् D H  ५ + प्रभाते A B  ६ न्त्या° -ककुभि वासरके- D न्त्या° -रिकरकरा- D  ७ री° -र्झरधातु- E F  ८ तु° -प्रखर- D तु° -खुरपटपुट- E तु° -पुटपटूत्था- D तु° -पाटितोदयगिरितटपद्म- D तु° -रागपरागच्छायाभि- E F तु° -रागच्छायाभि- D H इति अम° च।

[1]केसरिकरतलाहतमत्तमातङ्गोत्तमाङ्गसङ्गलदस्रप्रसारिणी-[2]भिरिवोदयाचलकूटकोटिप्ररूढजपाकुसुमकान्तिभिरिव त्रि-[3]भुवनकार्यसम्पादकप्रभानुरागरसैरिव रक्तमण्डले [4]तारा-कुमुदग्रहणाय प्रसारितहस्त इव कुङ्कुमरागारुणे[5] प्राचीवि-लासिन्याः पूर्वाचलभोगीन्द्रफणोपले [6]गगनेन्द्रनीलतरुकनक-

---

प्रौढा जरां निश्चितमेव सूते
वृद्धा नितान्तं बलजीवहानिम् ॥

इति ।

द्विजराजो ब्राह्मणश्रेष्ठः । वारुणी मदिरा पतिष्यति प्रा-त्यलमेष्यति । रक्तमण्डलेऽरुणमण्डले भास्कर उदयमारोहती-त्यन्वयः । करीन्द्रेत्यादि । धातुर्गैरिकः । पद्मरागो मणिः । कूटः शृङ्गम् । अस्रं रुधिरम् । रुधिरेऽसृग्लोहितास्रमित्यमरः । प्रसा-रिणी प्रणालिकेति हारावली । अनुरागो लोकानां प्रीतिः ।

ताराकुमुदेत्यादि । फणोपले फणास्थरत्ने गगनमाकाश एवेन्द्रनीलतरुस्तस्य कनककिसलये स्वर्णपल्लवे राजभवनादौ निर्मितेन रूपकम् । तत्र रेखा गवयन्यायात् तरुता ।

---

१ पूर्वगिरिके- D के० -मात्रमच्छुलगल- D के० -प्रसारणी- A D E H के० -प्रसारणा- B C F G २ भि० -प्ररूढप्रोढक- D H ३ भु० -रत्नकार्य- C भु० -सम्पादनप्र- D H भु० -भावानु- D E H ४ तारामण्डलकु- D ताराकुसुम- A B G ताराकुमुदवन- D ५ + कनकदर्पणे D ६ ग० -तरुकाननकि- D

किसलये [1]नभोनगरप्राचीरकनककुम्भे नमस्तोयकुम्भाकारे [2]प्राचीललाटतटकुसुम्भाम्बुबिन्दौ [3]सन्ध्यावनलतैककुसुमे [4]मञ्जिष्ठारक्तपट्टवस्त्रसदृशे [5]सन्ध्यारागगुणगुम्फिते [6]प्राचीकाञ्चनदीनारचक्र इव [7]वासरविद्याधरसिद्धगुटिक इव[8] [9]धातुरागारुणदिग्गजपादतलानुकारिणि विभावरीतिमिरतस्करे[10] भास्करे[11] उदयमारोहति[12] [13]माञ्जिष्ठचामर इव दिग्गजेषु महाभारतसमरभूमिरुधिरोद्गार इव कुरुक्षेत्रेषु

---

नभ इत्यादि। प्राचीरं नगरप्रान्ते कण्टकादिवेष्टनम्। प्राचीरं प्रान्ततो वृतिरित्यमरः।

प्राचीललाटतटे कुसुम्भाम्बुबिन्दौ महारजनजलबिन्दौ।

स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि।

इत्यमरः।

दीनारचक्रं निष्कचक्रम्। दीनारेऽपि च निष्कोऽस्त्रीत्यमरः। तस्करे मोषके। दस्युतस्करमोषका इत्यमरः।

एतादृशे बालातपे प्रसरति। दिग्गजकपोले माञ्जिष्ठं म-

---

१ न० -मरकत- A B F G H २ प्राचीकुमारील- A प्रा० -कुङ्कुमा- A B C F G ३ सन्ध्याप्रवालल- E H ४ माञ्जि- इति जग०। म० -ष्ठारागावरूप- D म० -सूत्रपरसमसन्ध्या- B म० -सूत्रसदृश- D F H ५ सन्ध्यावधिगु- H स० -रागवधिकिरणगु- E ६ प्राचीवधूका- A ७ वा० -सिद्धि- D ८ — इव D ९ धातुधाराव- D १० -रचयकरे D ११ -भास्करे A D G १२ + सति A B १३ म० -ष्ठावरणा- D

[1]सुरराजशरासनकान्तिलेप इव[2] जलदच्छेदेषु [3]काषायपट इव शाक्याश्रममठिकासु[4] कौसुम्भराग इव [5]ध्वजपटपल्लवेषु फलपाक इव कर्कन्धूषु [6]कुङ्कुमच्छटारस इव व्योममहा-सौधाङ्गणस्य[7] सञ्चरदरुणजवनिकापट इव कालनर्तकस्य[8] [9]बालप्रवालभङ्गारुणे प्रसरति बालातपे क्षणेन च चाटु-[10]चटुलचक्रवाकहृदयशोकसन्तापहरणादिव दहनसमर्पिततेजःप्रवेशादिव [11]दिननाथकान्तोपलानलसङ्गादिवोष्णायमानमुष्णरश्मेराश्रयति रश्मिसञ्चये कन्दर्पकेतुः सर्वरात्रजागरणपरवशाद्दारशून्यशरीरतया निश्चेतनोऽनेकयोजनश-

---

ञ्जिष्ठारक्तं चामरमिव। तेन रक्तमित्यण्। सुरराजशरासनमिन्द्रधनुः। काषायं कषायरक्तम्। शाक्यो बौद्धभेदः। मठिका मढीति भाषायाम्। कर्कन्धूर्बदरी। कर्कन्धूर्बदरी कोलीत्यमरः। जवनिका तिरस्करिणी।

प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा।

इत्यमरः। प्रवालो विद्रुमः।

क्षणेन चोष्णरश्मेः सूर्यस्य रश्मिसमूह उष्णायमानमाश्रय-

---

१ सुरेश- A B C F G H सुरपति- D २ -लेखेव A B G H -लेश इव E ३ कषाय- C F क॰ -पट्ट D इति जग॰ च। ४ -मपटलेषु D ५ ध्वजपटेषु H ६ कुसुम्भ- D ७ -से B ८ -नटकस्य D ९ — बाल- D E H १० च॰ -वाकचक्रवालहृ- A B च॰ -न्तापसङ्क्रमणा- A B ११ दिवानाथ- A B C D F G H

सम्भ्रमणखिन्नो वासवदत्तयाप्येवंविधया सह लतागृहे मन्द-
मारुतान्दोलितकुसुमपरिमललुब्धमुग्धपरिभ्रमद्भ्रमरझङ्कारम-
नोहरे [1]तत्कालागतया निद्रया गृहीतो निःस्पन्दकरणग्रामः
सुष्वाप।

ततो वणिजीव [2]प्रसारिताम्बरे महादावानल इव सकल-
काष्ठोद्दीपिनि[3] पतङ्गमण्डले [4]मध्यन्दिनमारूढे कथमपि
कन्दर्पकेतुः[5] प्रियया [6]विनाकृतं [7]लतागृहमवलोक्योत्थाय

---

तीत्यन्वयः। दिननाथकान्तोपलं सूर्यकान्तमणिः। निःस्पन्द-
करणग्रामः स्वस्वविषयग्रहणासमर्थेन्द्रियवर्गः।

तत उभयोर्निद्रोत्तरम्। पतङ्गमण्डले सूर्यमण्डले नभो-
मध्यमारूढे सतीत्यन्वयः। वणिजीव प्रसारिताम्बरे प्रसारित-
वस्त्रे। पक्षेऽम्बरमाकाशम्। काष्ठमिन्धनं काष्ठा दिक्। दीपिनि
प्रकाशके दाहके च। पतङ्गौ पक्षिसूर्यौ च। अम्बरं व्योम-
वाससी इत्युभयत्रामरः।

अथ कन्दर्पकेतुर्दैवेनेति कर्तृपदमध्याहार्यम्। प्रियया
विनाकृतं लतागृहमवलोक्य विललापेत्यन्वयः। विनायोगे
पृथग्विनानानाभिरिति तृतीया।

---

१ तत्कालसुलभया D E २ विसा- C ३ काष्ठापहारिणि A B C F + क-
ल्पष्टच इव सर्वाशाप्रसाधके D ४ नभोमध्यमारूढे E ५ + प्राप्तप्रबोधः E H
६ विना C D F H ७ ल० -गृहमालो- B C F G

च तत इतो दत्तदृष्टिः क्षणं विटपेषु क्षणं लतान्तरेषु[1] क्षणं तरुशिखरेषु क्षणमन्धकूपेषु क्षणं शुष्कपर्णराशिषु[2] क्षणमाकाशे क्षणं दिक्षु[3] विदिक्षु च [4]भ्रमन्ननवरतविरहानलदह्यमानहृदयो विललाप। प्रिये वासवदत्ते देहि मे दर्शनं

---

विरहादुन्मादं वर्णयति। परिहासार्थमन्तर्हिता स्यादिति। क्षणं विटपेषु वृक्षविस्तारेषु। क्षणं लतान्तरेष्वन्विष्यन्। तत्र तामनुपलभ्य शङ्कते। ननु नेयं परिहासेनान्तरिता पूर्वं मया नेयं विप्रलब्धा सम्यक्प्रदाशयानभिज्ञा क्षुत्तृषार्ता श्रान्ता तादृशानुरागा सेयं शिरीषमृदङ्गी भीषणे प्रदेशे कथं मां परित्यज्य स्थास्यतीति। मानुषीष्वेतादृग्रूपानुपलब्धा नागकन्येति केनचिन्नागेन वा न नीता स्यादिति क्षणमन्धकूपेषु क्षणं शुष्कपर्णराशिषु साक्षान्मृत्युयोगात् तद्विषोष्मणा वा तत्क्षण एवापगतजीविता भीरुत्वेन शयनस्थान एव परित्यक्ता स्यात्। अत्यप्सरोरूपा केनचिद्वियद्विहारिणा विद्याधरादिना वोपहृता स्यादिति क्षणं तरुशिखराग्रे क्षणमाकाशे क्षणं दिक्षु विदिक्षु च। कुत्राप्यनुपलब्धादनवरतविरहानलदह्यमानहृदयः। अतएवापगततर्कः। आह।

प्रिय इत्यादि। दैवदुर्विलसितं भाग्यदुर्विपाकम्। अवदातं शुद्धम्। दैप् शोधने कर्मणि क्तः।

---

१ लतास्तरेषु A B C D F G २ -राशिषु C ३ + क्षणं विदिक्षु च परित्र· B — विदिक्षु च A C D E F G H ४ अ० ·रतद- A C E F G H अ० ·रत- दुःखाग्निद- D

किं परिहासेनान्तरितासि[1] त्वत्कृते यानि[2] मया [3]दुःखा-
न्यनुभूतानि तेषां त्वमेव प्रमाणं हा प्रिय[4] मकरन्द पश्य
मे दैवदुर्विलसितं किं मया न कृतमवदातं कर्माहो दुर्विपाका
नियतिरहो दुरतिक्रमा कालगतिरहो ग्रहाणामतिकटु क-
टाक्षनिरीक्षणमहो[5] विसदृशफलता गुरुजनाशिषामहो दुः-
स्वप्नानां दुर्निमित्तानां च फलितं सर्वथा न किञ्चिदगोचरो[6]

---

अवदातं तु विमले मनोज्ञे सितपीतयोः ।

इति हेमः । अहो नियतिर्विधिर्दुर्विपाका ।

दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।

इत्यमरः । दैवनियत्योः पर्यायतया पुनरुक्तिरियं वैचित्र्येन । कालगतिः दुःखेनातिक्रमो यस्याः । कटु क्रूरम् । गुरुजनाशिषामसाम् परित्यज्य यातोऽपि सुकृतिभोग्यान् भोगान् लभस्वेत्येवं रूपाणाम् । स्पष्टा चेयं रीतिरर्जुनदाराणामभिमन्युविलापे महाभारते ।

विसदृशफलता दुःस्वप्नानामित्यादि । भवितव्यतानाम् । किञ्चित् शुभमशुभं वा । नागोचरो नाविषयः । तथाच भवभूतिः ।

---

१ -न्तर्हितासि A B F G २ + यानि A B — यानि C F ३ यानि दुः- C ४ + -सख A B C E F G ५ -न्यपतनमहो C D E F ६ कश्चिदगोचरो A B D E G H + भवति D

भवितव्यतानां किं न सम्यगागमिता[1] विद्याः किं न यथा-यदाराधिता गुरवः किं नोपासिता वह्नयः[2] किमधिक्षिप्ता भूदेवाः[3] किं न प्रदक्षिणीकृताः सुरभयः किं न कृत[4]

---

प्रायः शुभं च विदधात्यशुभं च जन्तोः
सर्वंकषा भगवती भवितव्यतैव।

इति। किं विद्या ज्योतिर्नीतिप्रमुखा न सम्यगागमिता न सम्यक् परिशीलिताः। यदावाभ्यां दुर्मुहूर्ते प्रस्थितं नीति-विरुद्धं चाच स्थितमिति भावः। यथावद्यथाशास्त्रम्। इदम-येऽप्युभयचान्वेति। किं भूदेवा द्विजा अधिक्षिप्तास्तिरस्कृताः। तदुक्तम्।

गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत।

इति। तेन किंवा ममेयमवस्थेति भावः। अग्रजन्मभूदेववाडवा इत्यमरः।

किं सुरभयो गावो न प्रदक्षिणीकृताः। यथेन्द्रमुपस्थायतुं-स्थातां सुदक्षिणां कृत्वा सत्वरो दिलीपो मार्गस्थां धेनुमप्रद-क्षिणीकृत्यैव यातस्तया शप्त एवमहमपि किं गोभिः शप्त इति भावः।

किं शरणेषु शरणागतेष्वभयं न कृतम्। येन मामपि क-

---

१ -मधिगमिता H  २ + किं नाभ्यर्चिता देवाः किंवाधिक्षिप्ता देवभूमयः D
३ — किमधिक्षिप्ता भूदेवाः A B C D E F G H  ४ कृतः A B C F दत्तं D

'[1]अरण्येऽप्यभयमिति बहुविधं विलपन्'[2] दक्षिणेन काननं निर्गत्य '[3]नव्यनडनलदनलिनीनिचुलपिचुलविदुलबकुलेन'[4] प्रचरचिरबिल्वबिल्वोटजकुटजरुद्धोपकण्ठेन सोत्कण्ठम्भृङ्ग-

---

क्षित् प्रियादानेन विरहानलान्न त्रायत इति भावः। दक्षिणे-नेत्येनबन्तम्। काननमित्येनपा द्वितीयेति द्वितीया।

निर्गत्य कच्छोपान्तेन कतिपयदूरं गत्वा जलनिधिमपश्यदित्यन्वयः। नव्या नडा धमना नलदान्यभयानि नलिन्यः पद्मिन्यः। निचुला हिज्जुलाः। पिचुला झावुकाः। विदुलाः परिव्याधाः। बकुलाः केसरा यत्र तेन। नडस्तु धमनः। नरकट इति ख्यातः। उशीरमस्त्रियाम्। अभयं नलदम्। खस इति ख्यातः। नलिनीपद्मिनीमुखाः। समौ पिचुलझावुकौ। झाउ इति ख्यातः। द्वौ परिव्याधविदुलौ। वेत इति ख्यातः। अथ केसरे बकुलः। मौरसरीति ख्यातः। निचुलो हिज्जुलोऽम्बुजः। स्थलवेत इति ख्यातः। समुद्रफल इति ख्यात इत्यन्ये। इति सर्वत्रामरः।

प्रचुरैश्चिरबिल्वैः करञ्जैर्बिल्वैः शैलूषैरुटजैः पर्णमयैर्मुनिगृहैः कुटजैर्वृक्षभेदैरुद्धोपकण्ठेन।

चिरबिल्वो नक्तमालः करजश्च करञ्जके।

मुनीनां तु पर्णशालोटजोऽस्त्रियामिति द्वयोरमरः।

---

१ अरण्येऽप्युरभयः A B C F  २ -पश्चिमतस्ततो A विलप्य मरणेच्छुः D  ३ न० -लभिदुल- A B E G H इति अम० च। न० -विचल- C  ४ -वञ्जुलेन C G -बकुलवञ्जुलेन D

राजरसितसुन्दरसुन्दरीवनेन विततवेत्रप्रततिप्रातावरणतरु-
णावरुणस्कन्धसन्नद्धभृङ्गरोलेन[1] [2]गोलाङ्गूलभग्नगलन्मधुच्छ-

---

कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि ।

इति विश्वप्रकाशः । कोरया इति भाषायाम् ।

घोत्कण्ठभृङ्गराजरसितेन सुन्दरं सुन्दरीवनं यत्र तेन ।

सुन्दरी तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत् ।

भृङ्गराजस्तु विज्ञेय ओषधे पक्षिभेदके ।

इति धरणिः ।

विततानां वेत्रप्रततीनां प्राते व्यूह आवरणं येषां तादृशा-स्तरुणा नवीना वरुणास्तिक्तशाकास्तेषां स्कन्धे सम्बद्धा भृङ्ग-रोलाः कीटाः पक्षिणो भ्रमरा वा यत्र तेन । वल्ली तु प्रत-तिर्लता । वरणे वरुणः सेतुस्तिक्तशाक इति द्वयोरमरः ।

भृङ्गरोलः पक्षिभेदे कीटभेदे च षट्पदे ।

इति धरणिः ।

गोलाङ्गूलेत्यादि । गोलाङ्गूलो वानरः ।

गोलाङ्गूलः प्लवङ्गश्च कीशः शाखामृगः कपिः ।

इत्युत्पलिनी ।

तालस्तृणराजः । हिन्तालो हीनोऽल्पस्तालो हिन्तालः । पृषोदरादिः । पूगः क्रमुकः । पुन्नागो देववल्लभः । केसरो

---

१ -भृङ्गलेन C　२ गो॰ -लभरभग्न- A B H　गो॰ -ग्रलग्नमधु- C F

चमधुपटलरसासारसिक्ततरुतलेन [1]तालहिन्तालपूगपुन्ना-[2]गकेसरवनेन [3]घनसारमल्लिकाकेतककोविदारमन्दारबी-

---

नागकेसरस्तैर्घनेन। तृणराजाह्वयस्तालः। ताड इति ख्यातः। पूगः क्रमुको गुवाकः। सुपारीति ख्यातः।

पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः।

गुर्जरदेशे देघरा इति ख्यातः। इति चिन्त्यमरः। केसरो नाग-केसर इति हैमः।

घनसारो वृक्षभेदः। कूष्माण्डको वा। मल्लिका हंसास्तृण-शून्यं वा केतकम्। कोविदारो युगपत्रकः। मन्दारोऽर्कः पारि-जातको वा। बीजपूरः फलपूरः। जम्बीरो मरुबकः। जम्बूः। गुल्माः स्तम्बास्तैर्गहनेन। कूष्माण्डकः पुष्पफलो घनसार इति हारावली।

घनसारस्तु कर्पूरे दक्षिणावर्तपारदे।

इति हैमः।

मल्लिको हंसभेदे स्यात् तृणशून्ये तु मल्लिका।

इति रुद्रः।

कोविदारे चमरिकः कुद्दालो युगपत्रकः।

कचनार इति ख्यातः। गणरूपविकीरणाः। मन्दारस्य। म-

---

१ नारिकेलकरकेलिराजतालीतालहिन्तालतमालतमालकदलीपूग- D
२ नलामके- A C D E F ३ घनघनसा- D

[1]जपूरजम्बीरजम्बूगुल्मगहनेनाप्रत्यूहदात्यूहकुहरितभरितन-
द्दीनलनिकुञ्जेन पुञ्जिताकुण्ठकण्ठकलकण्ठाध्यासितोद्दाम-
सहकारपल्लवेन [2]चपलकुलायकुक्कुटकुटुम्बसंवादितोत्कट-
विटपेन कोरकनिकुरुम्बरोमाञ्चितकुरबकराजिना रक्ताशो-
कपल्लवलावण्यलिप्यमानदशदिशा [3]प्रविकसितकेसररजो-
[4]विसरधूसरिमभरेण [5]परागपिञ्जरमञ्जरीमुह्यमानमधुकर-
मञ्जुसिञ्जितजनितजनमुदा [6]मदजलमेचकितमुचुकुन्दस्क-

---

दार इति ख्यातः। मन्दारः पारिजातकः। बकायन इति ख्यातः। मन्दारः पारिभद्रकः। पञ्चैते देवतरव इति देवतरुर्वा। फलपूरो बीजपूरः। बिजौरा इति ख्यातः। मरुबकः प्रस्थपुष्पः फणिज्जकः। जम्बीरोऽपि। मरुआ इति ख्यातः। अग्रकाण्डे स्तम्बगुल्माविति षट्स्वमरः।

अप्रत्यूह इत्यादि। प्रत्यूहो विघ्नः। पुञ्जीकृतेनाकुण्ठः कलकण्ठः कोकिलस्तस्य स्वरेणाध्यासिता उद्दामसहकारपल्लवा यत्र तेन। चपलेन कुलायकुक्कुटकुटुम्बेन संवादितो रुदित उत्कटविटपो यत्र तेन।

कोरकेत्यादि। निकुरुम्बः समूहः। कुरबको रक्तमहा-

---

१ ज॰ -मात्यूहदा- A B G इति अग॰ च। ज॰ -मामदा- C H ज॰ -म प्रत्यू- D E ज॰ -मात्युमदा- F ज॰ -त्यूहव्यूहकु- D E २ च॰ -कुलालकु- C G इति अग॰ च। ३ प्र॰ -तकुसुमके- A B प्र॰ -सरानुबध्यमानधू- D ४ वि॰ -रितभ- B C D ५ प॰ -रसिन्धुवारम- A प॰ -रपलाशम- D ६ म॰ -कुन्दकुन्दस्क- C F H

[1]न्धकाण्डकण्यमाननिःशङ्ककरिकटविकटकण्डूतिना कतिप-[2]यदिवसप्रसूतकुक्कुटीकुटीरीकृतकुटजकोटरेण चटकसञ्चा-[3]र्यमाणचटुलवाचाटचाटकैरक्रियमाणचाटुना सहचरीचा-रणचुञ्चुचतुरचकोरचुञ्चुना शैलेयसुकुमारतरशिलातलसु-

---

घटा। खाल कटघरैया इति भाषायाम्। विसरः समूहः। मुचु-कुन्दो वृक्षभेदः।

मुचुकुन्दो वृक्षभेदे मुनिदैत्यविशेषयोः।

इति विश्वः। कटः गण्डस्थलः।

कतिपयदिनप्रसूतकुक्कुट्या कुटीरीकृतं कुटजकोटरं नि-ष्कुहो यत्र तेन। चटकः कलविङ्कः। चटकः कलविङ्कः स्यात्। पुमपत्ये चाटकैर इति द्वयोरमरः। चटकाया ऐरक्। वाचाटो बहुभाषी। आलजाटचौ बहुभाषिणीत्याटच्।

सहचरीणां सञ्चारणैश्चुञ्चुभिर्वित्तैश्चतुरचकोरैः पक्षिभि-श्चुञ्चुना वित्तेन। तेन वित्तश्चुञ्चुप्चणपौ।

शैलेयम्। कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु। शैले-यमित्यमरः। शिलाजित इति ख्यातः। शेफालिका सुवहा। शेफालिका तु सुवहेत्यमरः। निवारीति ख्याता।

शिफा जटायां सरिति मांसिकायां च मातरि।

इति विश्वप्रकाशः। गौधेरः। गोधाया ढ्रगिति ढ्रगन्तः।

---

१ अकाण्डमथ्यमा- A B F अकाण्डमण्यमा- C २ य० -कुटीरक A B E य० -कुटीर- C इति जग० च। ३ र्य० -चटुवा- A B र्य० -चतुरवा- E H

खण्डयितखण्डकाष्ठिना शेफालिकाशिफाविवरविसन्धविवर्त-मानगौधेरराशिना निरातङ्करङ्कुना निराकुलनकुलकुलकेलिना कलकोकिलकुलकवलितसहकारकलिकोद्गमेन सहकारारामरोमन्थायमानचमरीयूथेन [१]श्रवणहारिसलीलगि[२]रिनितम्बनिर्झरनिनादनिद्राणमन्दायमानकरिकुलकर्णतालदुन्दुभिना समासन्नकिन्नरीगीतरवरज्यमानहरविसरेण

---

अथो गोधेरगोधारगौधेया गोधिकात्मजे।

इत्यमरः। गोह इति ख्याता। रङ्कुर्मृगः। रङ्कुशम्बररौहिषा इत्यमरः। राशिः समूहः। स्यात्निकारः पुञ्जराशी इत्यमरः। रोमन्थायमानाः। चर्वितस्याकृष्य पुनश्चर्वणं रोमन्थः। कर्मणो रोमन्थतपोभ्यां वर्तिचरोरिति क्यङ्। ङित्वादात्मनेपदम्। चमरो मृगभेदः। श्रवणहारि सलीलं गिरिनितम्बानां निर्झरनिनादेन निद्राणं करिकुलं तस्य मन्दायमानः कर्णतालो दुन्दुभिर्यत्र तेन। हरुर्मृगभेदः। वृता हरिता श्यामा न तु शुष्का या हरिद्रा तद्रूवे रज्यमाना। वराहपोतानां पोत्रपालिभिर्मुखाग्रपालिर्यत्र तेन।

पोत्रं वक्त्रं मुखाग्रञ्च सूकरस्य हलस्य च।

इति विश्वप्रकाशः। पालिः पङ्क्तिप्रदेशयोरिति विश्वः। गुञ्जानां काकचिञ्चीनां पुञ्जे गुञ्जज्जालकजालं यत्र तेन।

---

१ श्र० -सलीलगि- A B श्र० -सनीडगि- C D २ रि० -द्राणमन्द- A B C D F G

ललचरितदरिद्राङ्गवरज्यमानवराहपातपोत्रपालिना [1]गुञ्जा-[2]पुञ्जगुञ्जज्जालकआलेन [3]दंशनकुपितकपिकपोलनखको-टिपाटितपाटलकीटपुटसङ्कुलेन' कुलिशशिखरखरनखर-प्रचयप्रचण्डचपेटपाटितमत्तमातङ्गकुम्भस्थलरुधिरच्छटाच्छु-[5]रितचारुकेसरभारभासुरकेसरिकदम्बेन मत्तासागरकण्ठो-पान्तेन कतिपयदूरं[6] गत्वातिचपलवीचिप्रचयतया ताण्ड-

---

गुञ्जापि पटहे प्रोक्ता काकचिञ्च्यां कलध्वनौ ।

इति विश्वप्रकाशः ।

आलकः कथितो घोषः कारञ्जी चापि आलकः ।

इत्युत्पलिनी ।

घोषे कारञ्जिकायां च आलकः परिकीर्तितः ।

इति हारावली ।

दंशनेत्यादि । पाटलकीटः श्वेतरक्तः कीटविशेषः । कुलिश-शिखरं वज्राग्रम् । केसरभारः स्कन्धकेशसमूहः । भासुरं दी-प्तिमत् । भञ्जभासेति घुरजन्तः । कदम्बकं समूहः ।

अतिचपलवीचिप्रचयतयातिचञ्चलतरङ्गसमूहतया । ताण्ड-वेषूद्दण्डो दोर्दण्डो भुजदण्डो यस्य तादृशः । खण्डपरशुः शिव-

---

१ गुञ्जाकुञ्ज- A B C E F G H गुञ्जापुञ्जकुञ्ज- D २ पु० -आरव- C D E F पु० -आलेय D E F ३ दं० -कपिपोत- C D दं० -तचपेटकपा- D ४ -च्छु-डेन D ५ रितचारुतरके- A B ६ कतिपयपदानि D कतिपयाध्वानं E

¹दोर्दण्डचण्डखण्डपरशुविडम्बनापण्डितं वारुणीविजयपताकाभिरिव शेषभुजगनिर्मोकमञ्जुमञ्जरीभिरिव शशाङ्क-²परिमोषपरमाणुसन्ततिभिरिव लक्ष्मीलीलातर्पणधाराभिरिव³ ⁴जलदेवताचन्दनविच्छित्तिभिरिव फेनराशिभिरुपात्तरामणीयकमपरमिव गगनमवनिमवतीर्णमर्णवमच्छवालुकस्फुरत्कल्लोलारकणनिकरैर्नभश्चराम् मुक्ताफलैरिव⁵ बिडौजोभयमभयाभ्यर्थनागतानेकसपक्षक्षितिधरभरितकुक्षिभागं सगरसुतखनाखातमुत्खातपारिजातकमभिजातमणिरत्नाकरं करिमकरकु-

---

स्वच्छविडम्बनापण्डितस्तदनुकरणपण्डितस्तम्। भूतेशः खण्डपरशुरित्यमरः। वारुणी वरुणस्येयम्। विजयपताकाभिरिव। जलाधीशत्वादिति भावः।

शेष इत्यादि। निर्मोकः। समौ कञ्चुकनिर्मोकावित्यमरः। सन्ततिः समूहः। लक्ष्म्या लीलार्थं क्रीडार्थं यद्दातर्पणम्। अद-पन इति भाषायाम्। तद्धाराभिरिव। विच्छित्तिश्चमत्कारः। रामणीयकं रमणीयता।

अपरमित्यादि। सगरो राजा। खातम्। खनु अवदारणे। क्तः। जनखनेत्यात्वम्। पारिजातो देववृक्षः। अभिजातानां

---

१ दो॰ -दोःखण्ड- A C D E F  २ परिवेष- D  ३ + सुरतरुकुसुममालाभिरिव D  ४ ज॰ -ताकुचचन्द- B C F  ५ मुक्ताजालैरिव B G H

2 M 2

सङ्कुलं [1]शकुलकुलकवलनाभिलाषसञ्चरन्नक्रचक्रमस्तिमि-
ततिमिङ्गिलकुलं [2]कूलकन्दलीवलयाचलविलुलितवेलातरलि-
[3]तलवलीलवङ्गमातुलिङ्गगुल्ममूर्मिमारुतप्रसारिततरलतोत्ता-
[4]लतालच्छिन्नालताजीतरलितजलमानुषमिथुनमर्दितसलिल-
पुलिनबालशैवालं प्रवालाङ्कुरकोटिपाटितमुखखिन्नशङ्खनख-
शिखालिखिततटलेखं खगेश्वरगोत्रपत्त्ररथपटलकलिलसलि-
लमध्याप्यनिर्मुक्तमन्दरमथनसंस्कारमिवावर्तभ्रान्तिभिः साप-

---

शङ्खानां मणीनां रत्नानां चाकरः। करी जलचरो गजो मकरश्च। तयोः कुलेन। करिरूपमकरकुलेन वा सङ्कुलम्।

शकुलो मत्स्यभेदः। नक्रः कुम्भीरः। अस्तिमितं चञ्चलम्। तिमिं मत्स्यं गिलतीति तिमिङ्गिलः। मूलविभुजादित्वात् कः। अचि विभाषेति लत्वम्। गिलेऽगिलस्येति मुम्। महामत्स्यस्तस्य कुलं यत्र तम्।

कूलमित्यादि। लवली लताभेद इति केचित्। फलमित्यपरे। हरफारेवडीति प्रसिद्धम्। मातुलिङ्गको रुचकः। रुचको मातुलिङ्गक इत्यमरः।

प्रवालो विद्रुमः। पाटितं विदारितम्। शङ्खनखाः क्षुद्र-

---

१ शकुलकय- A H श० -कवलाभि- A B D श० -सञ्चरदनेकनक्रचक्र- C श० -मस्तम्रत- A B C F G २ कू० -याचलीचि- A C H ३ त० -मातुलुम्बगु- C त० -मातुलुङ्गगु- E F H इति जग० च। त० -गुल्मं माच- A C F G त० -मा-चलमर्मरि- D ४ ल० -तरलितं लोलज- A B H ल० -चरितज- D

स्मारमिव फेनैः ससुरामोदमिव वेलावकुलगन्धैः सरोषमिव गर्जितैः सखेदमिव निःश्वसितैः सभ्रुकुटीभङ्गरमिव[1] तरङ्गैः सालानस्तम्भमिव रामसेतुना कुम्भीनसीकुक्षिमिव लवणोत्पत्तिस्थानं व्याकरणमिव [2]विततस्त्रीनदीकृत्यवकुलं राजकु- [3]लमिव दृश्यमानमहापात्रं हस्तिबन्धमिव वारिगतानेकना-

---

ग्राह्याः। क्षुद्रग्राह्याः ग्राह्यनखा इत्यमरः। खगेश्वरो गरुडः। अपस्मारो रोगः। सुरा मद्यम्। आलानं बन्धस्तम्भः। आलानं बन्धस्तम्भ इत्यमरः।

कुम्भीनसी राक्षसी लवणस्तत्सुतः। व्याकरणमिव विततानि स्त्री स्त्र्यधिकारकार्याणि नदीसञ्ज्ञा तत्कार्याणि। कृत्यसञ्ज्ञा- कार्याणि। वकुलं मघवा बकुलमित्यादि। पक्षे विततानां स्त्रीनदीनां पत्नीभूतानां नदीनां कृत्यैरुरक्षाधरपानरूपै- र्बकुलम्।

राजकुलमिव। महापात्रं महामात्यः। पक्षे पात्रं तीरद्वया- न्तरम्। बन्ध बन्धने। अधिकरणे घञ्। हस्तिनो बध्यन्तेऽत्र हस्तिबन्धः। गजबन्धनस्थानमिव वारिगतैर्बन्धनरज्जुगतैस्तद्व- द्धैरनेकनागैर्गजैर्मुच्यमानफूत्कारम्।

पानीये वारि विख्यातं वारि बन्धनरज्जुषु।

---

१ -भङ्गमिव A D E　२ — वितत- A B C F G H　विस्तारितस्त्री- D
३ खण्डितमिव A B C E F G

गमुच्यमानफूत्कारं विश्वामित्रपुत्रवर्गमिवाम्भोजवामरमलङ्घो-पशोभितं सत्पुरुषमिव गोत्राश्रयं[1] साधुमिवाच्युतस्थितिरम-णीयं सुनृपमिव[2] सज्जनक्रमकरं कृतमन्युमिव करतोयाप्लुत-

---

इति धरणिः। वणिवपिथजिराजिग्रजिवदिहमिवाग्निवादिवा-रिभ्य इञ्जितीञ्। पक्षे वारि जलम्। नागाः सर्पाः। अमरस्तु। वारी तु गजबन्धनीति दीर्घान्तं बन्धनस्थानवाच्याह। तन्मते तु नैतदुपपद्यते कोशान्तरेष्वेवमेव।

विश्वामित्रपुत्रवर्गमिव। अम्भोजैः कमलैश्चामरैर्वालव्यजनै-र्लम्बदेवाधिपैः शोभितम्। पक्षेऽम्भोजचामरं शैवालम्।

शैवालं शैवलाम्भोजचामरं जलनीलिका।

इत्युत्पलिनी।

सत्पुरुषमिव गोत्रं वंशः। पक्षे पर्वतः। साधुमिवाच्युताभ्रष्टा स्थितिर्मर्यादा तथा रमणीयम्। पक्षेऽच्युतस्य विष्णोः स्थित्या र-मणीयम्।

सुनृपमिव सज्जनानां क्रमकरं व्यवहारकरम्। पक्षे सज्जा नक्रा मकरा यत्र तम्।

कृतमन्युमिव कृतक्रोधमिव करतोयेन पाणिजलेनाप्लुतं क्षालितं मुखम्। पक्षे करतोया नदी। करतोया सदानी-रेत्यमरः।

---

१ गोत्राश्रयं D २ सुनृपतिमिव A B C E F G

मुखं विरहिणमिव चन्दनोदकसिक्तं विलासिनमिव नर्मदानुगतमुद्धृतकालकूटमपि [1]प्रकटितविषराशिमतिवृद्धमपि सुन्दरीपरिवृतकण्ठं[2] सुरोत्पत्तिस्थानमप्यसुराधिष्ठितं[3] जल-

---

विरहिणमिव चन्दनस्योदकेन सिक्तम्। पक्षे चन्दना नदीविशेषः। चन्दनसम्बन्धि जलं वा।

विलासिनमिव नर्म क्रीडा तां ददति ताभिरनुगतम्। पक्षे नर्मदा नदी। नर्मदा सोमोद्भवेत्यमरः। उद्धृतः कालकूटो हालाहलो यस्मात् तमपि। प्रकटितो विषस्य क्ष्वेडस्य राशिर्येन तमिति विरोधः। विषं जलमिति परिहारः।

अतिवृद्धमतिस्थविरमपि सुन्दरीभिः स्त्रीभिः परिवृतकण्ठमिति विरोधः। अतिवृद्धं महीयांसम्। सुन्दरी वृक्षभेदः। कण्ठः समीपदेशः। इति परिहारः।

कण्ठो गले गलध्वाने समीपेऽपि प्रकीर्तितः।

इति विश्वः।

सुरासुरादयो मद्यं वा तदुत्पत्तिस्थानमपि ताभ्यामनधिष्ठितमिति विरोधः। यद्वा सुरस्य ब्रह्मण उत्पत्तिर्यस्मात् सुरोत्पत्तिर्विष्णुस्तस्य स्थानमपि। असुरैरधिष्ठितमिति परिहारः।

अचिन्तयदित्यादि। यद्यतो यस्मिन्वधे राघवेणारण्यवियुक्ता

---

१ प्रकटवि- C D २ -परिहृतोपकण्ठं B E -परिगतोपकण्ठं C -गतकण्ठं D -परिमतकण्ठं H ३ -धिष्ठानं A B C F -धिष्ठानस्थानं D

निधिमपश्यद्चिन्तयच्च। अहो मे[1] कृतापकारेणापि विधिनोपकृतिरेव कृता यदयं लोचनगोचरतां नीतः समुद्रः। तदत्र[2] देहमुत्सृज्य[3] प्रियाविरहाग्निं निर्वापयामि। यद्यप्यनातुरस्य [4]देहत्यागो न विहितस्तथापि कार्यः। न खलु सर्वः[5] कार्यमकार्यं वा करोति। इत्यसारे संसारे केन किं

---

कान्ता विसृष्टा सोऽयं लोचनगोचरतां नीतः। तदत्र देहमुत्सृज्य शरीरत्यागं कृत्वा। तत्कृतकर्माचरणासामर्थ्यादिति भावः। प्रियाविरहाग्निं निर्वापयामि। तेनापि कान्तां विरहाश्रयाग्निर्निर्वापितः। अहं तु शरीरमुक्तेरित्यर्थः।

एति जीवन्तमानन्दो नरं वर्षशतादपि।

इति प्राचीनगाथयात्मघातनिषेधाच्चाह। यद्यपीत्यादि। आतुरस्य तु मरणम्।

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि।
प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनादिकम्॥

इत्यादि स्मृत्युक्तमेव।

अवश्यं भाविनो भावा भवन्ति महतामपि।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः॥
अपथे पदमर्पयन्ति हि
श्रुतवन्तोऽपि रजोनिमीलिताः।

---

१ — मे F H २ + चात्रमेव D ३ देहमुत्सृजामि वि- A D E F H इति जम० च। ४ चात्मत्यागो C D ५ + सर्वं C D

था[1] न कृतम्। तथाहि। गुरुदारग्रहणं[2] द्विजराजोऽकरोत्। पुरूरवा ब्राह्मणधनतृष्णया[3] विननाश। नहुषः परकलत्रदोहदी[4] महाभुजङ्ग आसीत्। ययातिर्विहितब्राह्मणीपाणिग्रहणः

---

इत्यादिना भवितव्यताप्राबल्यं मन्वान आह। तथापीति। उभयमपि करोतीति भावः। अस्मिन्निति। किमकार्यं न कृतमित्यर्थः। द्विजराजश्चन्द्रः। गुरुदारग्रहणं बृहस्पतिभार्यायास्ताराया ग्रहणं तया सह सुरतं तत्र बुध उत्पन्न इत्यादिपर्वणि कथा। पक्षे द्विजराजो ब्राह्मणश्रेष्ठः श्रुतिस्मृत्याद्यध्ययनसम्पन्नः। गुरुदारग्रहणं गुर्वङ्गनागमनम्। पुरूरवा राजा वयःशेषे ब्रह्मस्वमगृह्णात् तत एव नष्ट इत्यपि भारते।

नहुषो राजा परकलत्रदोहदीन्द्राण्यां साभिलाषो महाभुजङ्गः सर्प आसीत्। कामुको दोहदी मत इति रत्नकोशः। वृत्रवधदोषदूषिते मघोनि नहुष इन्द्रपदे स्थितस्तत इन्द्राण्यां साभिलाषोऽभूत्। यद्यपूर्ववाहनारूढो मां समयोऽपयास्यसि तदा स्वीक्रियते मयेत्यभिहितो महर्षीन् याने नियुज्य सर्पसर्पेति त्वरमाणोऽगस्त्येन सर्पो भवेति शप्त इति हरिवंशे ब्रह्महत्या कामान्धतया महर्षिपीडनं चोक्रमनेन।

ययाती राजा कृतब्राह्मणीपाणिग्रहणः कृतदेवयानीपाणिग्रहणः पपात। तारुण्यादित्यर्थः। ययातिर्भृगुसुताया देवयान्याः

---

१ नाम C D H २ -दारहरणं A B C D F G H ३ -धनस्य तृष्णया A B ४ इति अग॰ प्र। हदो A B E H हृदेन C F G

पपात। [1]सुद्युम्नः स्त्रीमय इवाभवत्। सोमकस्य[2] प्रख्याता[3] जन्तुवधनिर्घृणता[4]। पुरुकुत्सः कुत्सित आसीत्। कुवलयाश्वोऽश्व-

---

परिचारिकायां शर्मिष्ठायामप्यासक्तो देवयान्या भार्गवाय निवेदितस्तेन शप्तः। प्रवया भवेति। अतिकामुकत्वेन वयोन्तरप्राप्तिर्ध्वनिता।

सोमकस्यैतदभिधानस्य जन्तोस्तन्नाम्नः पुत्रस्य वधेन निर्घृणता। पशो जन्तवः शरीरिणः। सोमकस्य शतस्त्रीष्वेकस्यां जन्तुसञ्ज्ञः पुत्र उत्पन्नः। स कदाचित् पिपीलिकया दष्टोऽरुदत्। ततः सर्वास्तन्मातरोऽरुदन्। ततोऽन्तःपुरे महानाक्रन्द आसीत्। तत् श्रुत्वा राज्ञा पुरोहितः पृष्टः। सन्तु मे बहवः पुत्राः कथमिति तेन जन्तुर्हतो हुतस्य तद्धूमाघ्राणात् सर्वाः सगर्भाः संवृत्तास्ततः शतं पुत्रास्तस्याभवन्निति भारते। जन्तुजन्युशरीरिण इत्यमरः। एतेन त्रयो महापातकिनो वर्णिताः।

कुवलयाश्वो राजाश्वतरकन्यामप्यश्वतराख्यनागकन्यामपि जहार। कुवलयाश्वो भार्यायां मदालसायां प्रमीतायामत्यन्तविक्लवः। तन्मित्राभ्यामश्वतरपुत्राभ्यां तद्वृत्तान्तः पित्र आख्यातः। पुत्रमित्रत्वान्मायानिर्मितां मदालसां तस्मायर्पयत् सः।

---

१ प्रद्युम्नः A B D G इति नर॰ च। २ यमस्य A B G ३ + जगति D
४ + नाम A B

नरकन्यामपि [1]जहार। नृगः कृकलासतामगमत्[2]। नलं कलिरभिभूतवान्। शम्बरणो[3] मित्रदुहितरि [4]विक्लवतामगात्।

---

न भस्मसात् कृतः कोऽपि विप्रः केनापि भूतले।
आब्रह्मसृष्टेरित्येतद्विस्मृत्य स्मरमोहितः॥
मनुजो नागकन्यामप्याजहार मदालसाम्।
कामान्धतां ध्वनयितुमिदमाह नृपात्मजः॥
अज्ञानादपि सञ्जातं पातकं फलति ध्रुवम्।
इति प्रदर्शयन्नाह नृगस्य कृकलासताम्॥

नृगो राजा। कृकलासतां सरटत्वमगमत्। सरटः कृकलासः स्यादित्यमरः।

नृगेण पुष्करे तीर्थे गा द्विजेभ्यः कृताः पुरा।
तत्राज्ञानाद्द्विजस्यैका कपिला मिश्रिताभवत्॥
अपराधात्ततस्तेन शप्तः सरटतामयात्।

नलं राजानं कलिस्तुर्ययुगोऽभिभूतवान्।

कालेन कलिना सोऽपि पुण्यश्लोकोऽति पीडितः।
इति संस्फोरयन्नूचे नलाख्यानं पुरातनम्॥

शम्बरणो मित्रदुहितरं प्रति सूर्यसुतां प्रति। पक्षे मित्रस्य सुहृदो दुहितरम्। स्पष्टम्।

---

१ परिजहार C  २ -मगात् C D H  ३ शम्बरो A B C D E F G H, संवरणो इति अग०।  ४ प्रकृतिविकृतितामगात् A B E F G

दशरथ[१] इष्टरामोन्मादेन[२] मृत्युमवाप। कार्तवीर्यो गोब्राह्मणपीडया पञ्चत्वमयासीत्[३]। युधिष्ठिरः समरशिरसि सत्यमुत्ससर्ज। "शान्तनुरतिव्यसनाद्विपिने[५] विललाप। इत्थं नास्त्यकलङ्कः कोऽपि[६]। तदहमपि देहं त्यजामि[७]। इति वि-

---

दशरथ इति। मृगयायां हतस्य तपस्विनः पित्रोर्यथा पुत्रवियोगादावयोर्मृतिरेवं पुत्रशोकान्मृतिस्तेऽस्तु। इति शापाद्रामवियोगेन मृतिः। मृगयासक्तिव्यसनेन तपस्विवधोऽपि ध्वनितः।

कार्तवीर्यः सहस्रबाहुर्गोर्जमदग्निगोर्ब्राह्मणस्य जमदग्नेः पीडया मृतः।

अनेनैवापराधेन रामेण निहतोऽर्जुनः।

युधिष्ठिर इति। शान्तनुरिति।

शोकान्मृतिर्दृषोत्सर्गो वने च परिदेवनम्।

कन्दर्पकेतुः स्वलतावुपष्टम्भकमुक्तवान्॥

तदहमपि देहं त्यजामीति विचिन्त्य पुलिनमाससादेत्यन्वयः।

कुररा उत्क्रोशास्तेषां खरनखरशिखरैः खण्डितपृथुरोमबिलं झषबिलम्। उत्क्रोशकुररौ समौ। पृथुरोमा झषो मत्स्य इत्यमरः।

---

१ -रथो हष्ट- A B F  २ -मवियोगोन्मादेन E -मराख्यो रामोन्मादात् इति जग०। ३ + मनुः सुवर्णव्यसनी ननाश C F  ४ शन्तनु- A C F H  ५ -व्यसनाद्वने A F H  ६ + प्रायः C  ७ देहत्यागेन कलङ्की भवामि C

त्विन्त्य [1]कुररखरनखरशिखरखण्डितपृथुरोमविलमविरलश-[2]कुलकुलशल्कजलनकुलोच्चारं[3] [4]क्रोष्टुकुलोत्सृष्टविकटक-[5]र्कटकर्परपरम्परापरिगतोपान्तमतितरलतरजलरयलुलितच-टुलशफरकुलकवलनकृतमतिनिभृतबकशकुनिनिवहधवलि-[6][7]तपरिसरमतिचपलजलकपिकुलविहरणलुलितसलिलकण-

---

अविरलानि शकुलकुलस्य मत्स्यविशेषकुलस्य शल्कानि यत्र। तादृशा जलनकुलानामुच्चारा यत्र तत्। शल्के शकलव-ल्कले इत्यमरः। उच्चारावस्करौ शमलं शकृदिति च।

क्रोष्टुकुलोत्सृष्टाः शृगालकुलत्यक्ताः विकटाः कर्कटानां कर्परपरम्पराः कपालपरम्परास्ताभिः परिगतोपान्तं व्याप्तप्रा-न्तम्। स्यात् कर्परः कपालोऽस्त्रीत्यमरः।

अतितरलजलस्य रये वेगे लुलितं चटुलं यत् शफरकुलम्। तत्कवलने कृतमतिरतएव निभृतो मन्दस्चेष्टाशून्यो बकशकु-निनिवहस्तेन धवलितपरिसरम्।

अतिचपलेति।

शिशुमारो जलकपिस्तन्दकी चासिपुच्छकः।

---

१ कु॰ -तष्टपुलष्ट- B D २ कुलशल्काक्रमणसङ्कुलज- A B कुलसङ्कुलज- C कुलशल्कसङ्कुलज- D H इति जग॰ च नर॰ च। कुलशकलसङ्कुलज- E F कु॰ -मकुलकुलो- A B C D E F G H इति नर॰ च। ३ -रणं A B F -लोच्छ्रायं D -लोप्सारं इति नर॰। ४ क्रो॰ -विकलमर्क- C ५ र्क॰ -गतप्रान्त- B C D F G H र्क॰ -ललचणशफ- A B F G ६ -हशबलित- D ७ त॰ -मतिसमुद्दितच- A B F G H

[१] निकरजनितपवनरयपरिमिलितशिशिरतरमनुदिवसनिपत-दतितरुणवनमहिषगवलशिखरलिखितविषमतटमनवरतचर-दसितमुखचरणविहगनिवहमधुरनिनदमुखरितमहिमकरच-

---

इति हारावली।

अनुदिवसं निपतन्तोऽतितरुणा वनमहिषास्तेषां गवलशिखरैः शृङ्गाग्रैर्लिखितानि विदारितानि तैर्विषमतटम्। गवलं माहिषं शृङ्गमित्यमरः। अत्र गवलप्रयोगे यद्वक्तव्यं तदन्यत्रोक्तम्।

अनवरतं चरन्तोऽसितमुखचरणा धार्तराष्ट्रास्तेषां निवहस्तस्य मधुरनिनदैर्मुखरितम्।

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।
मलिनैर्मल्लिकाख्यास्ते धार्तराष्ट्राः सितेतरैः॥

इत्यमरः।

अहिमकरः सूर्यस्तस्य चरणैरिव किरणैरिव रुचिरं भासुरं जलमनुजानां जलमनुष्याणां शयनेन मृदितं जलगतं जलान्तर्गतं धरणितलं यत्र। यद्वा। अहिः सर्पो मकरो जलजन्तुभेदस्तयोश्चरणेन भ्रमणेन रुचिरं पोताधानादिरहितं जलजमनुजशयनेन मृदितं जलधरणितलं यत्र।

---

१ निकरपतितप- D लि॰ -पवनपरि- D E H लि॰ -शिरितसम- D E लि॰ -शिरिततटम- H

[१]रणरुचिरजलमनुशयनम्रदितजलधरणितलमतिबहलम-[२]दजलशबलकरटतटकरिवरशतनिपतितमधुकरविरुतरतिक-[३]रमतिजवनपवनविधुतजलधिजलपटलविनटननिपतितमणि-गणपरिगतपरिसरं जलनिधिभुजगनिर्मुक्तनिर्मोकपट्टमिव दर्पणमिव वसुन्धरायाः स्फटिककुट्टिममिव वरुणस्य विपुलं पुलिनजलमाससाद।

ततः कृतस्नानादिर्जलमवतरितुमारेभे शरीरत्यागाय। अथ सानुशयेषु शाखेषु निर्मत्सरेषु मत्स्येष्वक्षुद्रेषु क्षुद्रेषु वत्स-

---

अतिबहलमदजलशबलः करटो गण्डो येषां तादृशकरि-वरशतेषु निपतितमधुकराणां विरुतिभिः शब्दै रतिकरम्। काकेभगण्डौ करटावित्यमरः। कट इत्यपि पाठोऽर्थस्त्वभिन्नः।

अतिजवनोऽतिवेगवान् पवनस्तेन विधुतजलधिजलपटला-न्निपतिता मणिगणा यत्र तादृशः परिसरो यस्य तम्। जवनस्तु जवाधिक इत्यमरः।

जलनिधीत्यादि। तत इत्यादि। आकाशसरस्वती आ-काशवाक् समुदचरदुत्थिता अकर्मकत्वादुदश्चर इत्यात्मनेपदं न।

---

१ र० -तलमतिशयमुदितजलधरनिकरमतिबहल- A B २ द० -रशत-शयप- A द० -रशतशयनतलप- B D द० -रशयननिप- C द० -धुकरनि-करमधुरवि- A B F द० -धुकरमधुरवि- D ३ र० -धुतजलवि- A B C D E F G H र० -पतिततमालगत- D

लेषु कच्छपेष्वक्रूरेषु नक्रेष्वभयङ्करेषु मकरेष्वमारेषु शिशुमारेष्वाकाशसरस्वती[१] समुदचरत्। आर्य कन्दर्पकेतो पुनरपि तव[२] प्रियया सह सङ्गमो [३]भविष्यत्यचिरेण तद्विरम मरणव्यवसायादिति। तदुपश्रुत्य मरणाद्विरराम[४]। पुनः [५]प्रियया समागमेच्छया शरीरस्थितिहेतुमाहारं[६] [७]चिकीर्षुर्महासागरकच्छोपान्तभुवं[८] जगाम। अथ [९]तत इतः परिभ्रमन् फलमूलादिना वने[१०] वर्तमानः[११] कियन्तं कालं निनाय कन्दर्पकेतुः।

एकदा[१२] कतिपयमासापगमे[१३] काकलीगायन[१४] इव

---

तत्स्वरूपमाह। आर्येत्यादि। एकदा वर्षासमय आजगामेति सम्बन्धः। काकलीगायनः कलसूक्ष्मगायनस्तद्वत्। मन्द्रं निम्नं घोषं गभीरं वागानन्दं ददाति तादृशः। पक्षे मन्द्राः परिपूर्णपाथाः निम्नगा नद्यो मदाश्च यत्र। काकली तु कले सूक्ष्मे। निम्नं गभीरं गम्भीरमिति द्वयोरमरः।

---

१ -काशात् सरस्वती A B D F H २ — तव E F ३ भविष्यतीत्य- A B E G H ४ विरराम मरणारम्भात् C D E ५ प्रियासमागमाशया C D ६ -तुभूतमशनं C D ७ चिकीर्षुः कच्छो- C D ८ -वनभुवं D ९ तत्र च C D १० — वने A E F H ११ वर्तयन् C D F H १२ + ऽपि A B + तु C D E H १३ -यदिवसापगमे A B F H १४ -गीयमान B F H

[1]सन्नद्धनिम्नगामदः सन्ध्यासमय इव नर्तितनीलकण्ठः कुमारमयूर इव समूढशरजन्मा महातपस्वीव प्रशमितरजःप्रसरस्तापस इव धृतजलदकरकः प्रलयकाल इव दर्शिताऽनेकतरणिविभ्रमो[2] निरुपद्रुतकाननोद्देश[3] इव [4]घनोत्क-

---

नीलकण्ठः शिवः। पक्षे मयूरः। कुमारमयूर इव समूढः शरजन्मा षडाननो येन। पक्षे समूढानां पुञ्जीभूतानां शराणां जन्म यत्र।

समूढः पुञ्जिते भुग्ने सद्योजाते धृतेऽपि च।

इति विश्वः।

रजो धूलिः। पक्षे द्वितीयो गुणः। तापस इव तपस्वीव धृतो जलदो जलप्रदः करकः कमण्डलुर्येन। पक्षे धृता जलदाः करका वर्षोपला येन।

करका मेघपाषाणे करका च कमण्डलौ।

दाडिमेऽपि च करकं करो च करकः स्मृतः॥

इति विश्वः। वर्षासु करकावर्णनं कविसम्प्रदायः।

प्रलयकाल इव दर्शिताऽनेकतरणीनां सूर्याणां विभ्रमो येन। पक्षे तरणिर्नौः। स्त्रियां नौस्तरणिस्तरिरित्यमरः। विभ्रमो भ्रमणम्।

निरुपद्रुतकाननोद्देश इव घनमत्यन्तं घना वोत्कुकिताः

---

१ सन्नद्ध- A B C D E F G H २ -विक्रमो A F ३ -काननप्रवेश A B -काननप्रदेश F G ४ घनसमुत्क- A B F G H

क्षितसारङ्गो रेवतीकरपल्लव इव हलिधृतिकर¹ आजगाम वर्षासमयः। निर्भिन्नमेघनीलोत्पलकानने क्रीडासरसीव नभसि स्मरस्य रत्ननौकेव ²जलदलक्ष्मीमातङ्गकन्यानर्तनरज्जु-

---

सारङ्गा हरिणा यत्र। पक्षे घनेन मेघेनोत्सुकिताः सारङ्गाश्चातका यत्र।

चातके हरिणे पुंसि सारङ्गः शबले त्रिषु।

इत्यमरः।

रेवतीकरपल्लव इव हलिनो बलरामस्य धृतिकरो धैर्याधायकः। पक्षे हलिनां कर्षकाणां धृतिकरः प्रीतिकरः।

इन्द्रधनुर्लता रराजेति सम्बन्धः। निर्भिन्ने विकसिते मेघ एव नीलोत्पलकानने क्रीडासरसीव नभसि कुसुमशरस्य रत्ननौकेव रत्नजटितनौकेव जलदलक्ष्मीव मातङ्गस्य चण्डालभेदस्य कन्या सैव नर्तकी तस्या रज्जुः समाकर्षणरज्जुः। चण्डालकन्या रज्जुमवलम्ब्य नृत्यति।

चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः।

इत्यमरः।

नभ इति। प्रवसता निदाघेनोष्णोपगमेन स्मरणाय दिवो द्योः पयोधरे स्तने मेघे च दत्तानि नखक्षतानीव।

---

१ + रावण इव समेघनादो विन्ध्यगिरिरिव सघन C   २ ख॰ -र्तनरसर- A B D F G.

रिव नभःसौधतोरणमालिकेव प्रवसता[1] निदाघेन दिवः पयोधरे दत्त्वा स्मरणाय[2] नखक्षतावलीव गगनलक्ष्मीरत्नरसनामालेव [3]नभोमन्दारतरुसुन्दरकलिकामालेव[4] रतिनखमार्जनरत्नशलाकेव रत्नशुक्तिरिव कुसुमकेतोरिन्द्रधनुर्लता रराज। अतिवेगनिपीतजलधिजलशङ्कमालामिव ब-

---

चिरोत्पन्नप्रवासेन प्रीतिर्गच्छेत् पराभवम्।
रागायतनसंस्मारि यदि न स्यान्नखक्षतम्॥

इति कामतन्त्रम्। निदाघ उष्णोपगमः। द्योदिवौ द्वे स्त्रियामभ्रमित्यमरो द्वयोः।

गगनलक्ष्म्या रत्नरसनेव काञ्चीव।

स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा।

इत्यमरः। नभोमन्दारस्य देवतरुविशेषस्य सुन्दरकलिकामालेव।

रतिरित्यादि। अतिवेग इति शङ्खपाने हेतुः। बलाकाच्छलाद्विसकण्ठिकामिषादूर्ध्वंमण्डलदेशेऽदृश्यत। बलाका विसकण्ठिकेत्यमरः। बकजातिविशेषः। कैतवापह्नुतिरलङ्कारः।

कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते पदैः।

इति लक्षणात्।

---

१ प्रसारिता D  २ — स्मरणाय C D E F  ३ न० -न्दारस्तु- C D E G H न० -तरुकुसुमक- B C G H  ४ -न्दरमञ्जरीलेखेव A  -न्दरमञ्जरीव D  -न्दरकलिकालेखेव F

¹लाकाक्कलात्कुड्मलमदृश्यत जलदः। ²पीतहरितैः क्षुण्णासु³ केदारिकाकोष्ठिकासु ⁴समुत्पतद्भिर्जतुधवलैरिव दर्दुरैर्नयद्यूतैरिव⁵ चिक्रीड वर्षाकालः। रविदीपकज्जलनिचयनिभे निकषोपल इव ⁶मेघसमयसुवर्णकारनिकषितसुवर्णरेखेव तडिदशोभत⁷। विरहिणां हृदयं विदारयितुं

---

क्षुण्णास्वखिलासु मृदूर्वास्वित्यर्थः। जातिद्वयसद्भावाद्विशेषणसार्थक्यम्। क्वचित् क्षुष्टास्विति पाठस्तत्र हलसंस्कृतास्वित्यर्थः।

केदारिका एव कोष्ठिकास्तासु। केदारकोष्ठाभ्यामल्पत्वे कन् रूपम्। क्रियारीति भाषायाम्। वस्त्रादिनिर्मितं क्रीडासाधनं खलविशेषः। कोठा इति च।

पीतहरितैस्तद्वर्णैर्जतुधवलैर्लाक्षारक्तैः। नयो युद्धनीतिलक्षितचकैर्द्यूतैस्तुरङ्गैस्तुरङ्गसाधनेषु लक्षणा नयद्यूतसाधनभूतैर्हस्त्यश्वादिभिरिव समुत्पतद्भिर्दर्दुरैर्भेकैः कालश्चिक्रीड। आतुषैरिति पाठे विकारे त्रपुजतुनोः षुगित्यण् षुगागमश्च।

रविरिति। निकषोपलमाकषः। आकषो निकषोपलम्। कसौटीति भाषायाम्।

विरहिणामिति। करपत्रं क्रकचम्। क्रकचोऽस्त्री करपत्र-

---

१ ल० -मन् समह- D २ आपीत A B C F ३ क्षुष्टासु A B D इति जग० च भर० च। ४ स० -जांतुषव- A B D F H इति जग० च। ५ दर्दुरैर्नयद्यूतैरिव A B D F G H दर्दुरैर्विद्युता समं नवद्यूते C E इति जग० च। + धारीभिरिव C ६ प्रावृट्स- A मेघे मन्मथ- D मेघे प्रावृट्स- F मेघसमूह- H ७ -द्रराजत D E

करपत्रमिव कुसुमायुधस्य क्रकचच्छदमशोभत । जलद-दारूणि लोलतडिल्लताकरपत्रदारिते[१] [२]पवनवेगनिर्धूतास्चूर्ण-चया इव जलरेणवो बभुः । विच्छिन्नदिग्वधूहारमुक्ता इव खरपवनवेगभ्रमितघनघरट्टघट्टनसञ्चूर्णिततारानिकरा इव [३]त्रिभुवनविजिगीषोर्मकरध्वजस्य प्रस्थानलाजाञ्जलय इव करका व्यराजन्त[४] ।

[५]अनन्तरमखञ्जखञ्जरीटेऽकुञ्चितक्रौञ्चसञ्चारे [६]निर्भर-

---

मित्यमरः । आरा इति भाषायाम् । क्रकचपत्रं केतकपुष्पम् ।

द्रोणीदलं सूचिपुष्पं जम्बालं क्रकचच्छदम् ।

इति हारावली । लोलतडिल्लताकरपत्रदारिते जलददारुणि मेघकाष्ठे पवनवेगनिर्धूताः कम्पितास्चूर्णचया इव जलरेणवः शीकरा बभुः शुशुभिरे ।

विच्छिन्नेति । घनो मेघ एव घरट्टः । जाता इति भाषा-याम् । पुरुषप्रेरणानिरपेक्षो जलादिरयभ्रममाण. । करका वर्षोपलाः ।

अनन्तरं शरत्समयारम्भे कन्दर्पकेतुः शिलामयीं पुत्रिकां

---

१ -पत्रनिपातदारिते A -पत्रनिपातविदारिते B C D २ पवनवेगोद्भूता- A B पवनवेगाधूता- C पवनवेगधूता- D E H ३ भुवन- C D G ४ व्यराजन् E F + नवशाद्वलं सेन्द्रगोपं मत्तीमहिलायाः शुकश्यामलं लाक्षारसलाञ्छितस्तनोत्त-रीयमिवालक्ष्यत । मेघकुम्भसलिलैः पृथिवीनायिकां स्नपयित्वा प्रावृट्चेष्टाकृतायां ततः स्वच्छमम्बरं दर्शयन्ती शरन्नदी समाजगाम । C ५ अ० ऽकु- A F H अ० -ऽतिकु- D ६ मर्दनि- A B F H

[1]भारद्वाजद्विजवाचाटविटपे पटुप्रभप्रभाते भ्रान्तभृङ्गकुलकलमकेदारे प्रवेशितावेशिकराजहंसे [2]कंसारातिदेहद्युतिद्युतले [3]हंसतूलतुलितजरज्जलमुचि सान्द्रीकृतेन्द्रमहकामुक-

---

पाश्वालिका मम प्रियानुकारिणीयमिति तां करेण पस्पर्शेति सम्बन्धः ।

शरदं वर्णयन्नाह । अखञ्जाः सङ्गतयः । खजि गतिवैकल्ये । अकुञ्चिते विसृते निर्भरं भारद्वाजद्विजैर्वाचाटविटपे । भारद्वाजवाचाटत्वं विटपेष्वारोप्यते । तेन लक्षणानामालङ्कारोऽत्र ।

साक्षादनभिसम्बन्धात् सम्बन्धिषु परिग्रहः ।

यत्र सा लक्षणा नाम ।

इति कण्ठाभरणे । पटुप्रभं सुन्दरं प्रभातं यत्र । भ्रान्तं भ्रमणविशिष्टं भृङ्गकुलं तादृशं कलमानां शालीनां केदारं क्षेत्रं यत्र । प्रवेशिता आवेशिका आगन्तवो राजहंसा यत्र । स्युरावेशिक आगन्तुरित्यमरः ।

कंसारातिदेहद्युति कृष्णशरीरतुल्यकान्तौ द्युतले हंसवत् तूलं हंसतूलं तत्तुलिते जरज्जलमुचि पुराणमेघे जलसंयोगकृतं नवत्वं जलवियोगकृतं जरत्त्वं बोध्यम् । सान्द्रीकृता घनीकृतेन्द्रमहकामुकानां श्वनां मुत् प्रीतिर्येन तत्र ।

---

१ भरद्वाजवा- C F भा० -द्विजरचितवा- D २ कंसारिदे- A B C D F G कं० -द्युतिनिर्मलद्यु- A B G कं० -द्युतिनिभनभस्तले D ३ हंसकुलतु- A B D H हं० -लितराजज्जलमु- A B D E F G H

मुदि मधुरमधुतृणवीरुधि [1]सुरससारसरसितसारकासारे [2]शोभनकसेरुकन्दलुब्धपोत्रिपोत्रोत्खाततटतडागे चकितचातके [3]सञ्चरन्मत्स्यपुत्रिकापत्रिपटलमधुरध्वनिविहितमुदि कदर्थितकदम्बे कम्बुदिषि[4] प्रसूतबिसप्रसूने विरलवारिदे

---

मृगदंशस्य शुनको ग्रामसूकरभेदकौ।

अस्थिभक्षस्य कपिल: स्यादिन्द्रमहकामुक:॥

इत्युत्पलिनी। मधुरा मधुतृणवीरुधश्च।

खड्गपत्रो मधुतृणमिक्षुर्मधुतरुर्मत:।

इत्युत्पलिनी। सुरसं सारसानां रसितं सारस्तत्वं यत्र तादृक् कासार: सरो यत्र तत्र। कासार: सरसी सर इत्यमर:।

शोभनकसेरुकन्दलुब्धानां पोत्रिणां वराहाणां पोत्रैर्घोणाभिरुत्खाततटास्तडागा यत्र तस्मिन्। कोल: पोत्री किरि: किटिरित्यमर:।

चकितास्तृप्ता: संशयिता वा चातका यत्र। चक तृप्तौ प्रतीघाते च। सञ्चरदिति मत्स्यपुत्रिका जन्तुविशेष:। कदम्बो नीपवृक्ष:। कादम्ब इति पाठ: क्वचित्। कलहंस:। कादम्ब: कलहंस: स्यादित्यमर:। बतक इति ख्यात:। प्रसूतानि बिसप्रसूनानि कमलानि यत्र।

---

१ सरस- D २ — शोभन- A C D E F H ३ सञ्चरन्माष- A C D E F H सञ्चरन्मांसपत्रिका- इति नर०। स० -पत्रिका- A B D F स० -अनमुदि D E ४ कदम्बद्विषि A B कम्बविद्विषि C F

मारमरतारके [1]चारुचन्द्रमसि [2]स्वादुतरसरःसलिले स्फु-रितशफरचक्रकवलननिभृतबकानीके[3] मूकमण्डूकमण्डले[4] [5]सङ्कोचितकञ्चुकिनि[6] काञ्चनच्छेदगौरशालिशालिनि[7] क्रो-शदुत्क्रोशे [8]सुरभिगन्धिसौगन्धिकगन्धवाहिहरिणाश्वे [9]कुमु-दामोदिनि कौमुदीकृतमुदि निर्बर्हबर्हिणि निःकूजत्कोय-ष्टिके [10]धृतधार्तराष्ट्रे हृष्टकलमगोपिकागीतसुखितमृगयूथे कथीकृतयूथिके[11] [12]म्लायमानमालतीमुकुले[13] बन्धूकबान्धवे सञ्जातसुजातके[14] विरचितसौत्रामधनुषि स्मेरकाश्मीररजः-

---

बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।

इत्यमरः ।

बकानीके बकसमूहे । मूको निर्वाक् । कञ्चुकी सर्पः । सौग-न्धिकं कह्लारम् । सौगन्धिकं तु कह्लारमित्यमरः । हरिणाश्वो वायुः । पृषदश्वो गन्धवह इत्यमरः ।

कुमुदेत्यादि । निर्बर्हाः गलितपिच्छा बर्हिणो यत्र तत्र । कलमगोपिका शालिसंरक्षिका । यूथिकासीदिति कथामात्र-

---

१ चारुतरच- D  २ स्वादुसरः- A B D E G  ३ -बलानीके C D E G
४ -कुले A -पटले D  ५ सङ्कु- E H  ६ -किसुलकिनि C F -किसुलके D
७ -शालशालिनि A B C G -शालिकेदारे D  ८ सुरभिसौ- A D H सु०
-न्धिगन्ध- A D G H  ९ कुमुदामोदमो- C  १० मुदितधा- E धृतधृतिधा- D
११ -शके C  १२ म्लायितमाल- C म्लायन्माल- D म्ला० -तीलतामुकुले C D
१३ -कुसुमे D -बकुले H  १४ -तपुञ्जातके A B H -तमप्तच्छदे E H

पुञ्जपिञ्जरितदशदिशि [1]विकस्वरकमले शरत्समयारम्भे कन्दर्पकेतुः परिभ्रमन् शिलामयीं पुत्त्रिकां दृष्ट्वा कौतुकेन [2]मोहेन शोकावेगेन[3] मम प्रियानुकारिणीति करेण[4] पस्पर्श ।

अथ[5] सा स्पृष्टमात्रा[6] [7]शिलास्वभावमुत्सृज्य [8]पुनर्वासवदत्तास्वरूपमापेदे । तामालोक्य कन्दर्पकेतुरमृतार्णवमग्न इव सुचिरमालिङ्ग्य पप्रच्छ । प्रिये वासवदत्ते कथय किमिदं वृत्तान्तम् । उदिता सती सा[9] दीर्घमुष्णं च निःश्वस्य कथयितुमारेभे ।

आर्यपुत्त्रापुण्याया मम मन्दभाग्यायाः कृते महाभाग

---

श्लेषोक्तता । बन्धूको बन्धुजीवकः । रक्तकस्तु बन्धूको बन्धुजीवक इत्यमरः । दुपहरिया इति ख्यातः । विमुद्रिते सोत्रामधनुषीति पाठस्त्वशुद्धः । काश्मीरं कुङ्कुमम् । विकस्वरं विकसितम् । विकाशी तु विकस्वर इत्यमरः ।

अथेत्यादि । एकाकी असहायः । एकादाकिनच्चास-

---

१ मूकपिकमयूरविकस्वरसरोवरकमले A B विकस्वरभास्वरशरे C विकसत्कुमुके D २ मन्हामो- A B स्नेहेन C ३ शोकेन वेगेन A B H वेगेन D शोकवेगेन इति अम० । + कामित्वेन A B + -रविह्वः C ४ हस्ते B हस्तेन C ५ अनन्तरं C ६ — सा स्पृष्टमात्रा D E F G H ७ शिलामयीं मूर्तिमु- C ८ — पुनर् D H ९ वृत्तान्तजातम् । इत्युक्त्वा C

उज्झितराज्य एकाकी प्राकृतजन[1] इव वाङ्मनसयोरगोचरं[2] दुःखमनुबभूव। अथोपवासादिना[3] क्षामतरो मूलफलादिनार्यपुत्र आहारं[4] करोतीति विचिन्त्य फलान्वेषणायोपवनतरुनवलोकयन्ती[5] कतिपयनल्वगोचरमगच्छम्[6]। क्षणेन[7] च तरुगुल्मान्तरितक्रियमाणकायमानिकनिकेतनं[8] विरच्य-

---

च्छाये। एकाकी स्यैक एकक इत्यमरः। प्राकृतजन इव नीचजन इव। प्राकृतस्तु पृथग्जन इत्यमरः। वाङ्मनसयोरित्यचतुरेत्यच्प्रत्ययान्तो निपातः।

अथेत्यादि। अगच्छं याता। क्षणेन सेनासन्निवेशं सेनाशिबिरं दृष्ट्वेति चिन्तयन्तीं मां प्रति सेनापतिर्धावित इति सम्बन्धः। तरुगुल्मान्तरितं क्रियमाणं रच्यमानं कायमानिकैः कमार इति प्रसिद्धैर्हीनजातिपुरुषैर्निकेतनं पटमण्डपं यत्र तम्।

निवेशः शिबिरोद्वाहविन्यासेषु प्रकाशितः।

इति विश्वप्रकाशः। विरच्यमानं विशेषेण रच्यमानमीश्वरस्य सेनापतेर्भवनं यत्र तम्।

---

१ जन C पृथग्जन D २ -रमीदृशं A B ३ उपवासादिना A B D अनेकदिवसाहारशून्यतया C ४ क्षामतरो निद्रायते। यदि किञ्चिन् मिलति फलमूलादिकं तदा शरीरस्थितिं C क्षामतरतनुर्निद्रान्ते फलमूलादिकमाहारं D ५ -वलोक्य D — उपवनतरुनवलोकयन्ती E F H ६ -गोचरं वनमगच्छम् D -नल्वमगच्छम् E F H ७ क्षणेन A B C G ८ -कायमानिकनिकेतनं D G कायमानं C

[1]मानेश्वरगृहमवतार्यमाणकण्ठारकमारभ्यमाणपटकुटीकं व्यवस्थाप्यमानवेश्यानिवेशं[2] श्रूयमाणतुरगहेषाशतं[3] वाद्य-[4]मानविश्रमढक्काशतपुष्करमन्विष्यमाणस्वादुसलिलाशयमुद्दि-

---

अवतार्यमाणमश्वादेर्भूमावुत्तार्यमाणकण्ठारकम् । कण्ठा-लोति दाक्षिणात्यभाषायां प्रसिद्धम् । वस्त्रपात्रादिस्थापनार्थं वस्त्रादिनिर्मितं पात्रम् ।

व्यवस्थाप्यमानं यथास्थाने स्थाप्यमानम् । वेश्यानां निवेशो यत्र ।

श्रूयमाणं हेषाशतं यत्र तम् । हेषा ह्रेषा च निःस्वन इत्यश्वप्रकरणेऽमरः । अत्रत्यसमाधिः पूर्वमुदिता ।

वाद्यमानं विश्रमसूचकं ढक्काशतं पुष्करं वाद्यविशेषो यत्र तम् । वृद्धिविशिष्टो विश्रमशब्दस्तस्यैव इति स्पष्टं भाष्यप्रदीपे । स्याद्यशःपटहो ढक्केत्यमरः ।

पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः ।
ओषधद्वीपविहगतीर्थराजोरगान्तरे ।
पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च ।

इति विश्वप्रकाशः ।

---

१ मानस्वरस्ट- D इति अग० च मर० च । मा० -कण्ठालकम- A C D G H मा० -कण्ठालभकम- B इति अग० च । २ -सन्निवेशं A B -संवेशं C ३ -ह्रेषा-रवं A B C D ४ मा० -काढक्कारम- A G मा० -कापुष्करम- B C H मा० -कापणवम- D मा० -सलिलमु- E F H

श्यमानविपणिकेतुवंशं सेनासन्निवेशमपश्यम् ।[1] किमयं ममान्वेषणाय तातस्य व्यूहः[2] समायात आहोस्विदार्यपुत्रस्येति विचारयन्तीं मां [3]प्रति चारकथितवार्तः[4] सेनापतिर्धावितः । ततः किरातसेनापतिस्तादृश एव सेनान्वितो[5] मृगयागतः[6] सोऽपि धावितः । अनन्तरं चिन्तितं मया [7]यद्यहमार्यपुत्राय कथयामि तदा स एकाक्येभिरेव[8] हन्तव्यो-

---

उद्दिश्यमान उत्पाद्यमानो विपण्यां पण्यवीथिकायां केतुवंशः । दिश अतिसर्जने । यद्वा उद्दिश्यमानः केतोरस्मिन् भागेऽस्मदीय आवास इति ज्ञानार्थमुद्देशविषयीक्रियमाणः केतुवंशः । आहोस्वित् संशयेऽव्ययसमुदायः ।

चारेण गूढपुरुषेण कथिता वार्ता वृत्तान्तो यस्मै । चारश्च गूढपुरुष इत्यमरः । तादृशश्चारकथितवृत्तान्तः किरातसेनापतिः ।

भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ।

इत्यमरः ।

मृगयाया आखेटार्थमागतः । आखेटो मृगया स्त्रियामित्यमरः ।

अनन्तरं द्वयोरेकदेशागमनोत्तरम् । एकामिषलुब्धयोः ।

---

१ + तमवलोक्याहमचिन्तयम् C + ततोऽहमेवमचिन्तयम् D २ तातव्यूहः E F ३ प्रचार- E F ४ + द्रुतं A B D + मामुद्दिश्य C ५ सेनानुगतो A B सेनासमन्वितो C सेनयान्वितो D ६ मृगयाव्याजेनागतः C ७ यद्यहं गत्वार्य- A B H ८ एकाकी पतिरवश्यमेव C

ऽथ न कथयामि [1]तदेभिरहं घातनीयेति चिन्तापन्न एव द्वयोः सेनयोर्युद्धमभवदेकामिषलुब्धयोर्गृध्रयोरिव । ततः [2]प्रवृत्तप्रतिशरासनशरासारदुर्दिनहृतदिनकरकिरणे रण-

---

आमिषं पलले लोभे सम्भोगोत्कर्षयोरपि ।

आमिषं सुन्दराकारभूपादिविषयेऽपि च ॥

इति विश्वप्रकाशः ।

तत एवं रणखले सति । रणभूमौ धान्यमर्दनस्थान इति यावत् । योधाः सममेकैकावच्छेदेन द्विषां धनुषां च जीवस्य जीवायाः प्रत्यञ्चायाश्चाकृष्टिमाकर्षणञ्चक्रुरिति सम्बन्धः । अक्रमातिशयोक्तिरलङ्कारः । पूर्वनिपातप्रकरणानित्यत्वेनात्यन्तातिशयोक्तिः ।

अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमः ।

इति लक्षणात् ।

प्रवृत्तो यः प्रतिशरासनात् शत्रुधनुषः शरासारो बाणधारासम्पातस्तेन दुर्दिनं मेघच्छन्नदिनं तेन हृतदिनकरकिरणे सति । गौणे आसारदुर्दिने । धारासम्पात आसारः । मेघच्छन्नेऽह्नि दुर्दिनमित्यमरो द्वयोः ।

---

१ तदात्मसेनाभिधा- C तदेभिरेवाहं मेतव्योति D २ प्रविततशरसारदुर्दिन-दिन- C प्रहितशरासारदुर्दिनदीनदिन- D

[1]कर्मविशारदद्विरददन्तद्वयोत्क्षिप्तसुभटक्षणक्षिप्यमाणवि-द्याधरविभ्रमे [2]समरदर्शनसञ्चरदनेकनभश्चरचारणच-क्रवाले वेतालसमाक्रान्तस्कन्धकबन्धचक्रक्रियमाणचारु-प्रचारे[3] [4]चारुभटखड्गखण्डितद्विरदपादसमाप्तपिशाचीक-

---

रणकर्मणि विशारदश्चतुरो द्विरदो हस्ती तेन दन्तद्वयोत्क्षिप्तः सुभटः शूरस्तेन क्षणं क्षिप्यमाण आश्रीयमाणो विद्याधरविभ्रमो देवयोनिविशेषविशिष्टभ्रमो येन तस्मिन् सति।

समरदर्शनार्थं सञ्चरदनेकनभश्चरचारणानां देवकुशीलवानां चक्रवाले मण्डले सति। चक्रवालं तु मण्डलमित्यमरः। चारणास्तु कुशीलवाः।

चारुभटखण्डितद्विरदपादेन समाप्तं सम्यक् प्राप्तं पिशाच्याः कर्णे यदुलूखलाभरणं तत्कौतुकं यत्र।

समुत्पतत्पतिनिनद एव नान्दी नाटकादौ प्रयुज्यमानः काव्यार्थसूचकः श्लोको यत्र। नद्यृतश्चेति कप्। न कपीति ह्रस्वनिषेधः। तथाच भरतः।

आशीर्नमस्क्रियारूपश्लोकः काव्यार्थसूचकः।
नान्दीति कथ्यते।

---

१ क० -द्विरदकरदूरोत्क्षि- C क० -द्विरदकरदूरतरोत्क्षि- D H क०-प्रचञ्च-चरसु- C D  २ समरदर्शनलालसाम- A B  ३ -चारुचाराप्रचारे B C — वेताल० -प्रचारे E F H  ४ चा० -पादसमर्पितपि- A B C

शौलूखलाभरणकौतुके समुत्पतदतिनिमदनान्दीके[१] कान्दिशीकभीरुणि[२] रणखले [३]शृगालप्रार्थनीयेष्वामिषपिण्डेष्विव[४] जिह्मगदष्टेष्विव[५] शरीरेष्वनास्थां कलयन्तः[६] समं द्विषां[७] धनुषां च जीवाकृष्टिं[८] योधाश्चक्रुः। त्यागिन इव दानवन्तो मार्गणसम्पातमसहन्तः[९] सम्भ्रविलासिन इव शृङ्गारशोभिताः सहेमकक्षाश्च सदारामा इव कदलीराजिताः सद्विजाश्च निशा[१०] इव नक्षत्रमालोपशोभिता दिवसा

---

कान्दिशीको भयपलायितः। कान्दिशीको भयद्रुत इत्यमरः। भीरुः। शृगाले जम्बुके भीरुः शूरे वै दानवान्तर इति विश्वः। जिह्मगः सर्पः।

जीवा जीवन्तिकाभूम्योर्मौर्वीशिञ्जितवृत्तिषु।

इति विश्वप्रकाशः।

त्यागिन इव दातार इव दानं मदजलवितरणं मार्गणानां बाणानां याचकानां च सम्पातमसहन्तो महामृगा गजा रेजुः। महामृगः पुष्करिदीर्घमारुतौ इति हारावली।

---

१ समुत्फुल्लफलकिनि मदनन्दीके A B C H २ + प्रस्खलज्जीवजने जनोपघनजितकामिनि C ३ शृगालबलप्रा- A B H शृगालीप्रा- C D E F ४ — इव E F + वत्सदन्तेषु दर्पणेष्विव C + वत्सदन्ताक्रष्टेषु दर्पणेष्विव D ५ + क्षतेष्विव C D ६ कल्पयन्तः E F H ७ विद्विषां D ८ जीवाकर्षणं A B C D ९ इति अम॰ च। -सहमानाश्च A B C F G H १० निवहा C D E F G H

इवोल्लसत्पुष्करा महानागा बभुः। उत्क्षिप्ता[१] इव क्षमां मुञ्चन्तः पयोधय इवावर्तशोभिताः सोर्मयश्चोद्यानदेशा इव समस्तिकाश्वाः कुलगृहा इवाभिनवभाण्डधारिणो रत्नाकरा इव सदेवमणयो लेखा इव सेन्द्रधृतय-स्तुरङ्गाश्च विरेजुः। कर्णाभ्यां श्रुतपरपरिवादाभ्यां[२] खलोदयसाधुविपत्तिसाक्षिभ्यामक्षिभ्यां[३] मूर्ध्ना चास्थानेऽपि नमता[४] "[५]विमुक्तोऽहमिति हर्षादिव[६] ननर्त चिरं कबन्धः। ततः [७]कृतपरिहासेनेव चक्षुः[८] पिदधता परापवादश्रवण-

---

उत्क्षिप्ता इवाव्यवस्थितचित्ता इव क्षमां क्षान्तिं पृथ्वीं च। तुरङ्गा अश्वा विरेजुः। कबन्धोऽपमूर्धकलेवरम्। इत्यमरः। इत्थं हर्षान्ननर्त।

श्रुतपरपरिवादाभ्याम्। परापवादाभ्यां साक्षी साक्षाद्द्रष्टा। साक्षाद्द्रष्टरि सञ्ज्ञायामिति साधुः।

अस्थाने महानर्हस्थाने नमता। ततो रजसा जजृम्भे प्रादुर्भूतम्। जृभि गात्रविनामे। भावे लः।

कृतपरिहासेनेव चक्षुः पिदधताच्छादयता। लोकप्रसिद्ध-मेतत्। वायुरान्तरो बाह्यश्च। योधानां भटानां पलितङ्कर-

---

१ उत्क्षेपिता C २ -परिवादकुतूहलिभ्यां A B F H ३ नेत्राभ्यां समालोकितसाधुविपत्तिभ्यां C ४ चास्थानप्रणमता C ५ त्यक्तोऽ- C दिष्ट्याऽहं विमुक्त इति A इति जग० च। ६ — इव A B — हर्षादिव E F ७ — कृत- C G सपरि- D E F ८ चक्षूंषि C G

भीरुणेव श्रोत्रवृत्तिं स्थगयता सोन्मादेनेव वायुवेगविक्षिप्तेन[1] पलितङ्करणेनेव सुरयोषितामन्धङ्करणेनेव[2] योधानां तिमिरेणेव समरप्रदोषस्य पतितेनेव विमुक्तगोत्रेण[3] मीमांसकदर्शनेनेव[4] तिरस्कृतदिगम्बरदर्शनेन सत्पुरुषेणेव विष्णुपदावलम्बिना [5]रणजेन रजसा [6]जजृम्भे।[7] कश्चिद्राम इव रावणवधमकरोत् कश्चित् कृष्ण इव नरकच्छेदमकार्षीत् कश्चिद्बौद्धसिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत् कश्चित् क्षपणक इव कटावृतो बभूव[8] कश्चिदाशङ्कितोरुभङ्गः सुयोधन इव पयसि विवेश[9] कश्चित् शरतल्पगतो[10] भीष्म इव

णेन। पलितं जरसा शौक्ल्यमित्यमरः। आढ्यसुभगेति करणे ख्युन्। अरुर्द्विषदिति मुम्।

समरप्रदोषस्य रणरजनीमुखस्य। पतितेन इव महापातकिनेव विमुक्तगोत्रेण। गोत्रं वंशः। गोत्रा पृथ्वी। आशङ्कित ऊर्वोर्भङ्गो येन। पक्षे ऊरुर्महान् भङ्गः पराजयः।

शरतल्पं शरशय्याम्। चिराय। कार्तिकशुक्लदशमीमारभ्य

---

१ -गक्षिप्तेन D -गप्रक्षिप्तेन E F -गोत्क्षिप्तेन H २ -ङ्करेणेव E F H ३ + कुम्भपतिनेव मत्तपथगामिना कलिङ्गेनेव कृतधौम्याश्चिना राजसेनेव व्यवस्थितसत्त्वेन विनीतेनेवासमुद्धतेनासज्जनेनेव कृतान्तरेण C ४ मीमांसकेनेव A B H ५ रणरजसा A B समरजेन रजसा D ६ विज- D ७ + तत्र समरसम्भारे B C + तत्र च समरस्थाने D ८ — कश्चिद्राम इव रा॰ बभूव A D E F H + कश्चित् सुरापद्विज इव पपात B ९ — कश्चिदा॰ विवेश C १० -स्पशयो A B D E F G H इति अग॰ च।

चिराय[1] असमासीत् कश्चित् कर्ण इव [2]विक्लवीकृतसर्वाङ्गः शक्तिमोक्षमकरोत्। ततो विध्वस्तध्वजपटं पतत्पताकं च्युतचापचामरापीडं [3]स्खलत्खड्गं [4]निधनमवाप सैन्यम्।

अनन्तरं [5]यस्याश्रमस्तेन मुनिना [6]पुष्पादिकमादायागतेन प्रतिपन्नवृत्तान्तेन[7] त्वत्कृते ममायमाश्रमो [8]भग्नोऽतः शिला-

---

आयष्टकष्टमीपर्यन्तमित्युदयशङ्करपाठकाः। अत्रोपपत्तिस्तु तेषां कृतौ द्रष्टव्या। पक्षे चिराय चिररात्राय चिरस्येति चिरार्थका इत्यमरः।

विक्लवीकृतं विक्लवीभूतं सर्वाङ्गं यस्य। शक्तेर्बलस्य मोक्षं त्यागम्। पक्षे शक्तेर्वासवदत्ताया अमोघाया मोक्षं घटोत्कचे त्यागम्।

शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम्।

इति हेमचन्द्रः।

निधनं मरणम्। मरणं निधनोऽस्त्रियामित्यमरः। प्रतिपन्नवृत्तान्तेन ज्ञातवृत्तान्तेन। गत्या कर्मणि क्तः।

---

१ चिरायुः C २ विक्लवावधूतस- C विक्लवीभूत- D ३ स्खलद्धानुष्कं C स्खलत्खड्गधनुष्कं D ४ ततः समस्तसैन्यमन्योन्यं निधनमवाप A B सैन्यमन्योन्यं निधनमवाप C तत् समस्तमिह्याश्रमे मिथो निधनं जगाम सैन्यम् D ५ यस्याऽयमाश्रमस्तेन B D H ६ पु० -माहृत्याग- A B पु० -मादातुं म- H इति जग० च। ७ + योगदृश्या C ८ भग्न इति C D

मयो[1] भवेति शापान्तम्। [2]क्षणेन च वराकीं बहुदुःखमनुभवन्तीं मां विलोक्यार्यपुत्रकरस्पर्शावधिं शापान्तमकरोत्।

ततः कन्दर्पकेतुः समागतेन मकरन्देन[3] वासवदत्तया च[4]

---

क्षणेन च वराकीं बहु दुःखं भवद्वियोगजमनुभवन्तीं मां विलोक्य शापं शिलामयत्वरूपम्। आर्यपुत्रस्य करस्पर्शोऽवधिरन्तोऽस्य तादृशमकरोत्।

नागरोक्त्यार्यपुत्रेति नाट्योक्त्या च प्रयुज्यते।

इति भरतः।

ततः कन्दर्पकेतुः समं वासवदत्तासङ्गसमकालसमागतेन मकरन्देन वासवदत्तया च सह स्वपुरं कुसुमपुरं गत्वा हृदयं मनोऽनतिक्रम्य यथाहृदयं मनोऽनुरूपमभिलषितं येषु तानि सुखानि सम्भोगशृङ्गारसम्बन्धीन्यनुभवन् कालं निनाय। चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरः।

वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता। अधिकृत्य कृते ग्रन्थ इत्यर्थे वृद्धाच्छः। तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्। वासवदत्ताख्यायिका समाप्तेति पाठस्तु भ्रममूलकः।

---

१ + सुचिका त्वं A B २ क्षणेन च वराकी बहुदुःखमनुभविष्यतीत्यार्य- A अनन्तरं वराकीयं दुःखमनुभविष्यतीति करुणयार्य- C क्षणेन च वराकीय बहुदुःखमनुभवतीति करुणाकृष्टो मुनिरार्य- D ३ समागते मकरन्दे C ४ — च A B F G H

सह[1] स्वपुरं गत्वा [2]यथाहृदयाभिलषितानि[3] [4]सुखान्यनुभवन् कालं निनाय[5] ।

इति [6]महाकविसुबन्धुविरचिता वासवदत्ता[7] समाप्ता ।

---

के न वासवदत्ताया अलङ्कारा: प्रसाधका: ।
दर्पणे के च नेक्षन्ते व्याख्याने वरभूषणे ॥

दोषः कृतौ सुमतयो मम कोऽपि चेत् स
युष्माभिरत्र कृपया विनिवारणीयः ।
आर्ताः खगाः समवलोक्य सवर्ग्यबाधां
निःशङ्किका अपि कुर्वन्ति यतः समन्तात् ॥

त्रिलोकचन्द्रात्मजकृष्णराम-
सूनुस्त्रिपाठी शिवरामनामा ।
व्याख्यामकार्षं कृतिनः सुबन्धोः
कृतेरिमां काञ्चनदर्पणाख्याम् ॥

इति त्रिपाठिशिवरामरचिता दर्पणाख्या वासवदत्ताव्याख्या सम्पूर्णा ।

---

१ सतं A — सह B  २ यभि- A  यथाभि- B H  हृदयाभि- C D E F G
३ + तानि तानि C  ४ सुरतसुखा- A B C D E F G  ५ + इति C E
६ श्रीवररुचिभागिनेयमहा- D  ७ + आख्यायिका A B C E F G  + नामाख्यायिका D  + -भिधामाख्यायिका H

# शुद्धिपत्रम्।

| पृ० | प० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १ | ११ | चक्रवत | चक्रवत् |
| ३ | ३ | कोटिल्ये | कौटिल्ये |
| ४ | २ | -कज्जलिज० | -कज्जलमि० |
| ५ | २ | नकुश० | न कुश० |
| ७ | १० | -पमाभेदे | -पमा भेदे |
| १२ | १ | साकर्यं० | सौकर्यं० |
| १२ | १ | कसा० | कंसा० |
| १५ | १२ | -निबद्ध | -निबद्ध |
| १५ | १३ | -तानि० | -ता नि० |
| १८ | २ | च्छणो | छणो |
| २० | २ | सूचीदो | सूचीभेदो |
| २० | २ | ३ इति | शूलभङ्ग इत्युपरि |
| २४ | २१ | उत्थित० | उत्थितः |
| २६ | ११ | -पार्थिना० | -पार्थिवा० |
| २६ | २० | -जीवत | -जीवन |
| ३३ | २ | सन्थाः | सन्थः |
| ३३ | ३ | एवा० | एवो० |
| ३४ | १२ | पद्य | पद्ये |
| ३५ | ४ | माभू० | मा भू० |
| ३५ | ४ | कारकम | कारकम् |

| पृ० | प० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ३६ | २२ | -ह्रा | -ह्रा० |
| ३८ | ५ | येषाम | येषाम् |
| ४३ | १० | -मूर्ध क० | -मूर्धक० |
| ४८ | १४ | निम्नान्तव० | निम्नान्तय० |
| ४९ | १ | -रेष | -रेषु |
| ४९ | २ | कुर्वतीष | कुर्वतीषु |
| ५१ | २ | -मानष्य० | -मानुष्य० |
| ५१ | २१ | सुख चार० | सुखचार० |
| ६२ | १२ | चतु० | चक्षु० |
| ६४ | २ | दर्शनन | दर्शनेन |
| ७० | १३ | स्वपनः | स्वसनः |
| ७४ | १४ | निजकर० | निजकरि० |
| ७७ | १५ | क्षेमदान० | क्षेमदानन० |
| ७९ | १९ | असमवष्मगा | असमवष्मगाः |
| ७९ | १९ | वष्मगा | वष्मगाः |
| ७९ | १९ | असमगा | असमगाः |
| ८० | १ | -ष्टत्व० | -ष्टैत्व० |
| ८१ | १९ | सज्जन० | सज्जन |
| ८५ | १९ | रा० इति | निष्काशनीयम् |
| ८६ | १७ | रथीं | रथो |
| ८७ | १ | -नगतः | -नुगतः |
| ८८ | १९ | इवाक्ष | इवाक्ष० |
| ८९ | २१ | -ष्ठाग्रवि० | -ष्टाग्रवि० |
| ९४ | १ | वीर्यैः | वीर्यै |
| ९५ | २२ | सायन्तर० | सायन्तन० |

| पृ० | पं० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ९६ | २० | सज्जन्मत- | -सज्जन्मत- |
| ९८ | १३ | भैरवम | भैरवम् |
| १०१ | १२ | -मूर्द्धं क० | -मूर्धक० |
| १०१ | १६ | -मूर्द्धं क० | -मूर्धक० |
| १०३ | १ | -पुः प० | -पुःप० |
| १०३ | ७ | -विकटस्त० | -विकटः स्त० |
| १०३ | ८ | वपुः पू० | वपुःपू० |
| १०३ | १५ | सटाज० | सटा ज० |
| १०३ | २० | वर्द्धयित्वाक० | वर्द्धयित्वा क० |
| १०३ | २१ | -कटुस्का० | -कटुः स्का० |
| १०९ | ४ | अता | श्रुता |
| १०९ | १८ | ज | ज- |
| ११० | २ | तर्द्ध० | तैर्द्ध० |
| १११ | ८ | ग्राग्रः | ग्राग्र |
| ११२ | ८ | -मा पीवरत० | -माऽपि वीरत० |
| १२० | १२ | विभी- | बिभी- |
| १२१ | ४ | -मग्रा- | -मुग्रा- |
| १२५ | ११ | कन्यातुला च० | कन्या तुला च |
| १२५ | १२ | -भवा० | -भावा० |
| १३० | ८ | स्त्रीनाम् | ऽस्त्रीनाम् |
| १३२ | १२ | विरञ्चियां | विरञ्चिमां |
| १३२ | १९ | -धारा | -धारा- |
| १३७ | १९ | मुखकमलस- | मुखकमलसे |
| १४० | १५ | -मरोत् | -मकरोत् |
| १४१ | १४ | सो च्छास | सच्छास |

| पृ० | प० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १४३ | ६ | वाखा० | बाबा० |
| १४३ | ८ | -गुखवो | -गुरवो |
| १४७ | १० | -क्रियामां | -क्रियाणां |
| १४६ | ३ | वाख० | वाणि० |
| १४६ | ४ | -निपुरं | -निपुणं |
| १५१ | १४ | -मीयर | -मीयर् |
| १५१ | २० | स्पर्धाग्रह | स्पर्धाग्रहं |
| १५६ | ३ | मर्च्छा० | मूर्च्छा० |
| १५६ | ४ | -बाखः | बाणैः |
| १६० | १२ | -रवीनां | -रवीणां |
| १६० | १८ | जीयमाना | मीयमाना |
| १६१ | २० | -सा | —सा |
| १६२ | १ | मङ्कमुंङ्कः | मुङ्कमुंङ्कः |
| १६३ | १५ | ३ + तच्छ्रुत्वा D | निष्काम्यनीयम् |
| १६६ | २६ | सृताः | सृता |
| १६६ | २४ | -दिष्ठ | -दिष्ठ- |
| १७० | १४ | तिच | ति च |
| १७४ | १४ | -व्यहारो | -व्यवहारो |
| १७६ | १६ | छाया- | छाया- |
| १७७ | १८ | -पाप्रस- | -पाप्रसं- |
| १७७ | २१ | -पिप्रासु | —पिप्रासु |
| १८५ | ६ | माद्यम्न० | माद्याम्न० |
| १८६ | ६ | नलिनी० | नलिनी |
| १८७ | ८ | च्चयदा० | च्चयदा |
| १८६ | १८ | -भर | + -भर |

| पृ० | प० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १९३ | ३ | -ह्वे तु | -ह्वेतु |
| १९३ | १० | -न्योऽन्य० | -न्योन्य० |
| १९३ | १० | -सङ्घटन० | -सङ्घट्टन० |
| १९३ | १२ | सेर्ष्या | सेर्ष्याः |
| १९५ | ९ | सित बद्ध स्त्री० | सितबद्धस्त्री० |
| १९७ | ६ | -रव | -रेव |
| १९९ | १५ | जन | जनं |
| २०० | १७ | ऽभयेऽव्यये | अभये अव्यये |
| २०० | २१ | गमनात | गमनात् |
| २०४ | १० | भ्रात्तु० | भ्रात्तु |
| २०५ | १ | साहसेन० | साहसेन |
| २०७ | १० | ह्रम्नि० | ह्रनि० |
| २०७ | ११ | युगियुक् | युगिति युक् |
| २०८ | २० | चन्द्रम | चन्द्रमा |
| २०९ | २ | यशोधन- | यशोधन |
| २१२ | १ | -धरेशा का० | -धरेशा का |
| २१२ | १ | मुक्ता० | मुक्ता |
| २१३ | २१ | -पयोधरेशा | —पयोधरेशा |
| २१४ | ५ | वाञ्छेति | वाञ्छेति |
| २१४ | ७ | ऽन्योऽन्यं | ऽन्योन्यं |
| २१५ | १३ | -स्तेषु | -स्तेन |
| २१७ | १० | पाठ० | पाट० |
| २३५ | ६ | भ्राजमाण० | भ्राजमान० |
| २३९ | ३ | सङ्कट | सङ्कटे |
| २४० | १० | -मागर० | -सागर० |

| पृ० | प० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| २४१ | १७ | -लाञ्छित० | -लाञ्छित० |
| २४५ | ४ | यस्या स्ताम् | यस्यास्ताम् |
| २४७ | ५ | सुग्रीव | सुग्रीव० |
| २५१ | ६ | दिग्भ्या | दिग्भ्यो |
| २५८ | ३ | स्रुत | स्रुतं |
| २६० | ३ | प्रचर० | प्रचुर० |
| २६० | १६ | -वं ै: | -वंश्यैः |
| २६५ | ८ | -कारः | -कायः |
| २६६ | १ | -पात० | -पोत० |
| २६८ | १ | म्ल े: | म्लेच्छैः |
| २७२ | ८ | तेनाप्य | तेनाऽप्य |
| २८१ | ४ | घनोत्स- | घनोत्सु- |
| २८३ | १५ | वि- | वि- |
| २९० | १ | -गाचरं | -गोचरं |
| २९३ | १० | -त्वत्वन्ता- | त्वत्यन्ता- |
| २९९ | २ | -स्पर्शावधिं | स्पर्शावधिं |